एवञ्च सति "न च नैमित्तिकोच्छेदः कर्तव्यो हि कथञ्चन" इति वाक्यस्य प्रामाण्येऽपि—सूतकादिमध्यपतितजातकर्मादिसञ्चयनादिश्राद्धपरत्वमेव।

दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च।
प्रेतपिण्डक्रियावर्जमशौचे विनिवर्तते ॥ ५४ ॥ ( यमशङ्खौ )

तेनाष्टकामावास्यादिश्राद्धं पितृकर्मत्वान्निवर्तते। मासिक-वार्षिक-श्राद्धयोर्वचनान्तरादशौचानन्तरं क्रिया च। ग्रहणे स्नानदानं च वचनान्तरादशौचेऽपि स्यादिति। संक्रान्तिस्नानदानादिकं वर्ज्यम्। यत्तु—अस्नाताशी मलंभुङ्क्ते अजपी पूयशोणितम्। ( जाबालिः ) इति वाक्याद् भोजननिमित्तयोर्जपस्नानयोरशौचेऽपि कार्यत्वमिति, तन्न। नैमित्तिकानां निषिद्धत्वात्।

आपोशानद्वयं मुक्त्वा तथा प्राणाहुतीरपि ॥ ५५ ॥

इति सर्वत्यागस्मरणात्। विमूत्रस्पर्शननिमित्तस्य चाण्डालादिस्पर्शननिमित्तस्य च स्नानस्यामन्त्रकत्वान्न प्रतिप्रसवः। सन्ध्यानिषेधे साविन्त्र्या अञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्यं नमस्कुर्यदितावत् कार्यम्।

"जन्महानौ वितानस्य कर्मत्यागो न विद्यते।"
शालाग्नौ केवलो होमः कार्य एवास्य गोत्रजैः ॥ ( जाबालिः )

चरौ कृते त्वमावास्यायामशौचपाते त्वारब्धत्वात् समापनमेव। तथाच पारस्करः "नित्यानि विनिवर्तेरन् वैतानवर्जम्।" वैतानिकानि नित्यानि दर्शपौर्णमासाश्रयणाग्निहोत्रचातुर्मास्यादीनि। निरूढपशुबन्धसोमयोः पर्वान्तरसावकाशत्वान्नाशौचेऽनुष्ठानम्। आश्रयणमपि अन्तिमपर्वपर्यन्तं गतमनन्यगतिकत्वादन्ते कार्यम्।

"श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात्' ॥ ५६ ॥ (व्याघ्रपादः)

## प्रभा

यद्यपि पितुः पितुः स्वसुः पुत्राः पितुर्मातुःस्वसुः सुताः। पितुर्मातुलपुत्राश्च विज्ञेया पितृबान्धवाः इत्युदाहृतत्त्वधृतनारदवचनात् पितुः पितृस्वसृपुत्रादीनां पितृबन्धुत्वमभिहितमत्र तदसम्भवादाह पितृबान्धवाः समानोदका इति।

किन्तु पर्युदासः इति 'अहरहः सन्ध्यामुपासीते'ति शास्त्रप्राप्तस्य नित्यविधेरन्यत्रा-

अशौचमध्ये ऋत्विग् यजमानश्चेत्यर्थः ।

"न च तत्कर्म कुर्वाणः सनाभ्योऽपि शुचिर्भवेत् ।"

सनाभ्यः सपिण्डः । तत्कर्म श्रौतेषु ऋत्विजम् । प्रवासश्चाशौचे निषिद्ध एव । आत्ययिककार्ये च शुद्धिविधानादेव । विपत्तौ प्रवासे कार्ये अग्न्युपस्थापनं कार्यम् । प्रवेशोपस्थापनं च पर्वादिसन्निधानावश्यकत्वात् कार्यमेव ।

न त्यजेत् सूतके कर्म ब्रह्मचारी स्वकं क्वचित् ।
न दीक्षणात् परं यज्ञे न कृच्छ्रादितपश्चरन् ॥ ५७ ॥

आदिपदं प्रारब्धकर्मोपलक्षणम् । न देवप्रतिष्ठा-विवाहयोः पूर्वसम्भृतयोरितिविष्णुवचने देवप्रतिष्ठापदं सर्वप्रतिष्ठोपलक्षणम्, विवाहपदं व्रतादेरुपलक्षणम् ।

ऋत्विजां दीक्षितानां च यज्ञकर्मणि कुर्वताम् ।
सत्रि-व्रति-ब्रह्मचारि-दातृ-ब्रह्मविदां तथा ॥ ५८ ॥ ( याज्ञवल्क्यः )

दाने विवाहे यज्ञे च संग्रामे देशविप्लवे ।
आपद्यपि च कष्टायां सद्यःशौचं विधीयते ॥ ५९ ॥

निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि ।
देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित् ॥ ६० ॥ ( ब्राह्मे )

## प्रभा

शौचदिनेभ्य इति निषेधविधावन्यत्र पदसूचितस्य नञःपर्युदासत्वमेव शास्त्रप्राप्तविधेर्निषेधात् । अमायां श्राद्धं कुर्वीत रात्रौ श्राद्धं न कुर्वीत, इत्यनयोर्वाक्ययो रात्रीतरत्रामायां श्राद्धं कुर्वीतेति पर्युदासविधिवदिति सक्षेपः । आपोशानद्वयमिति "अमृतोपस्तरणमसि स्वाहा, अतोपिधानमसिस्वाहे"ति भोजनाद्यन्तयोरशौचे नैमित्तिकत्यागइति भावः ।

आरभ्भ इति । प्रारम्भात् प्राग् यस्याशौचे सत्यारभ्भ एव न स्यात्, आरम्भानन्तरं तस्यैवाशौचे प्रारब्दकर्मणि नाशौचं प्रतिबन्धकम् इति सिद्धान्तः । गृहीतमधुपर्करूपबरणानन्तरं दीर्घकालसाध्ये वैतानिकादिकर्मणि वृतानां नाशौचमिति केचित् । होमादावित्यत्रादिपदं प्रारब्धकर्मोपलक्षणम् । तस्मादेतेषां प्रारब्धत्वेऽशौचस्याबाधकत्वाद् यागवत् समाप्तिरित्यभियुक्ताः ।

इदं च सहस्रनामादिजपकर्मवरणस्याप्युपलक्षणम्। अत्रापि वृतस्य नाशौचम्।

आरम्भो वरणं यज्ञे सङ्कल्पो व्रतदानयोः।
नान्दीमुखं विवाहादौ श्राद्धादौ स्यात् पचिक्रिया॥ ६१ ॥ (विष्णुः)
अकालमृत्योः शान्त्यर्थं महादाने च रोगिणाम्॥ ६२ ॥

महादानपदं शान्तिमात्रोपलक्षणम्।

दुर्भिक्षे प्राणरक्षार्थं कृतयज्ञस्य देहिनः।
राष्ट्रभङ्गे स्थितस्याथ पुत्रदारांश्च रक्षतः॥ ६३ ॥
ग्रहोपतापशान्त्यर्थं क्रियमाणे च कर्मणि।
तथोपसर्गात् स्वं देहं रक्ष्यमानस्य नो भवेत्॥ ६४ ॥
नित्यव्रतपरस्यापि कृच्छ्रचान्द्रायणादिषु।
निर्वृत्ते कृच्छ्रहोमादौ ब्राह्मणादिषु भोजने॥ ६५ ॥

सततं कृच्छ्राद्याचरणशीलस्य कृच्छ्रारम्भेऽप्यशौचं नास्तीति। कृच्छ्रहोमादिसमाप्तौ ब्राह्मणभोजनकर्मणि दातृभोक्त्रोश्च नाशौचम्।

विवाह-दुर्ग-यज्ञेषु यात्रायां तीर्थकर्मणि।
न तत्र सूतकं तद्वत् कर्म यज्ञानि कारयेत्॥ ६६ ॥ (पैठीनसिः)

अनापद्यपि।

अशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत्।
कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचं न बाधकम्॥६७॥ (प्रजापतिः)

एवं प्रेतक्रियायां तु पूर्वाशौचं न बाधकम्। प्राङ्नाड्याश्छेदनात् संस्कारपुण्यार्थान् कुर्वन्ति। संस्कारो जातकर्मादि। पुण्यार्था दानादयः। कुमारप्रसवे

## प्रभा

नित्यव्रतपरस्यापीति। यदकरणे प्रत्यवायस्तन्नित्यं परिकीर्तितम्। नित्यव्रतं समाचरतां प्रतिदिनं कृच्छ्राद्याचरतां कृच्छ्रारम्भेऽशौचं न बाधकम्। आरम्भात् प्रागशौचे जाते तु सुतरां न कृच्छ्राद्याचरणमिति। आरम्भादनन्तरं स्वाङ्गेन सह परिसमाप्तिपर्यन्तं नाशौचम्। अतएव तदङ्गब्राह्मणभोजनादावपि दातृभोक्त्रोर्नाशौचमित्यभिहितमिति भावः।

नाड्यामच्छिन्नायां गुड़तिल-हिरण्य-वस्त्र-प्रावरण-गो-धान्यप्रतिग्रहेष्वप्यदोषः ( शङ्खलिखितौ )।

उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ।
यद्यन्नमत्ति तेषां तु दशाहेन विशुध्यति ।
सूतके तु कुलस्यान्नमदोषमनुरब्रवीत् ॥ ६८ ॥ ( मनुः )

स्वकुलस्यान्नं स्वयं भोज्यमित्यर्थः ।

( षट्त्रिंशन्मते ) विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।
परैरन्नं प्रदातव्यं भोक्तव्यञ्च द्विजोत्तमैः ॥ ६९ ॥ ( आः पुः )
भुञ्जानेषु तु विप्रेषु अन्तरा मृतसूतके ।
अन्यगेहोदकाश्चान्ताः सर्वे ते शुचयः स्मृताः ॥७०॥ (आदित्यपुराणम्)

अङ्गाशौचम् । ''ततः सञ्चयनादूर्ध्वमङ्गस्पर्शो विधीयते ।'' ततःपूर्वमङ्गमशौचम् ।

चतुर्थेऽहनि कर्तव्यः संस्पर्शो ब्राह्मणस्य तु ॥७१॥ (अङ्गिराः)

खण्डाशौचे त्रिभागतः । अशौचकालाद्विज्ञेयं स्पर्शनं तु त्रिभागतः ॥७२॥

अशौचद्वयोः सन्निपातेऽप्यङ्गाशौचम् ।

सूतकमध्ये सुतके ( नितरां ) मृतकमध्ये मृतके ।
सूतके सूतिकावर्जं संस्पर्शो नैव दूष्यति ॥ ७३ ॥

स्नानोपस्पर्शनादेव पिता शुद्धः ।

अथ शुद्धिः ।

शुध्येद् विप्रो दशाहेन द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ॥
शौचाशोचं प्रकुर्वीरन् शूद्रवद्वर्णसङ्कराः ॥ ७४ ॥ ( मनुः )

## प्रभा

त्रिभागत इति । अङ्गिराः । चतुर्थेऽहनि कर्तव्यः संस्पर्शो ब्राह्मणस्य तु । क्षत्रस्य पञ्चमे ज्ञेयः सप्तमे च तथा विशः । शूद्रस्य दशमेऽप्येवं खण्डाशौचं त्रिभागतः ॥ इति सम्पूर्णं वचनम् । "क्षत्रस्य पञ्चम" इत्यादि तु क्षत्रियादीनां द्वादशाहाद्यशौचपक्षे ।

सङ्करा अनुलोमजाः। प्रतिलोमजास्तु विध्यनधिकारिणः। मूत्रपुरीषोत्सर्गवन्मलापकर्षं कुर्युरित्याहुः।

सर्वेषामेव वर्णानां सूतके-मृतके तथा।
दशाहाच्छुद्धिरथवा इति शातातपोऽब्रवीत् ॥ ७५ ॥ (अङ्गिराः)
एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः ॥ ७६ ॥

इत्यादिनाऽशौचसंकोचः कलीतरविषयः। तथाह—

दशाह एव विप्रस्य सपिण्डमरणे सति।
कल्पान्तराणि कुर्वाणः कलौ स्यान्मोहकिल्विषी ॥ ७७ ॥

तेन गुरुलघुतारतम्यादिनाऽशौचसङ्कोचो न कलौ। अत्र मरणग्रहणं जन्मनोऽप्युपलक्षणम्। विप्रग्रहणं क्षत्रियादेरपि।

षण्मासाभ्यन्तरे यावद् गर्भस्रावो भवेद् यदि।
तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते ॥ ७८ ॥
अत ऊर्ध्वं स्वजात्युक्तमशौचं तासु विद्यते।
सद्यःशौचं सपिण्डाणां गर्भस्य पतने सति ॥ ७९ ॥

तासामिति बहुवचनात् स्वजात्युक्तमिति लिङ्गाच्च सर्ववर्णस्त्रीसाधारणमिदम्। तेन पञ्चमषष्ठयोर्गर्भपाते कुलस्य सद्यःशुद्धिः। जाते मृते मृते जाते वा कुलस्य पित्रादेस्त्रिरात्रम्। तथाच बृहन्मनुः—

जीवन् जातो यदि प्रेयात् मृतो वा यदि जायते।
सूतकं मातुरेव स्यात् पित्रादीनां त्रिरात्रकम् ॥ ८० ॥

इदं सप्तमाष्टममासविषयम्। जातशब्दात्। तथाच स्मृतिः—

आ चतुर्थाद् भवेत् स्रावः पातः पञ्चमषष्ठयोः।
अतःप्रसवसंज्ञा तु सप्तमाष्टममासयोः ॥ ८१ ॥

तेन जाते शब्दलिङ्गात् सपिण्डानां त्रिरात्राशौचं सप्तमाष्टममासविषयमेव।

प्रभा

अस्मद्देशे तु सर्ववर्णानां दशाहाशौचपक्षाश्रयणात् चतुर्थेऽहन्येवास्थिसञ्चयमङ्गाशौचं च तावदिति गदाधरः। शङ्खलिखितवचनेऽपि शब्दात् कुमारप्रसवनिमित्तदत्तद्रव्यान्तरपरिग्रहेऽप्यदोष इत्यर्थः।

ब्राह्मवचनान्मातुःषष्टादूर्ध्वं दशरात्रं सर्वत्रैव। सप्तमाष्टमयोरपि बालजीवने सर्वेषां दशरात्रम्। जाते मृते मृते जाते वा सपिण्डानां दशाहादिकमिदं नवमदशमादिमासविषयम्। सप्तमाष्टममासयोस्त्र्यहाशौचविषयत्वात्। नवमादिमासमृतजाते पारस्करः—

गर्भे यदि विपत्तिः स्याद् दशाहं सूतकं भवेत् ॥ ८२ ॥

## प्रभा

सर्वेषामेव वर्णानामित्यङ्गिरोवाक्यादस्मद्देशे सर्वेषां वर्णानां दशाहाशौचसमाचारः। इति गदाधरः। दशाहेनेत्यादौ गतेनेति शेषः। अत्रेदं चिन्तनीयम्—"शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः। वृषलत्वं गता लोके ब्राह्मणादर्शनेन च॥" इत्याद्युपक्रम्य रघुनन्दनभट्टाचार्येण "कलौ क्षत्रियवैश्यौ न स्तः" इत्यभिहितम्। तन्मते ब्राह्मणव्यतिरिक्तानां सर्वेषामेव मासाशौचत्वम्। अथच त्यक्तोपनयनादि-संस्काराः क्षत्रियाद्यभिमानिनः केचन द्वादशाह-पञ्चदशाहाद्यशौचं समाचरन्तः स्मृतिशास्त्रमुल्लङ्घयन्तो यथेच्छं चरन्ती समाजेषु दरीदृश्यन्ते। तत्र तत्र स्मृतिशास्त्रपरिपालनोपदेशो दशाहाशौचपालनद्वारा गदाधरेण देशाचारं सर्वेषामेव वर्णानामित्यादिना वचनप्रमाणमङ्गीकृत्य च प्रदत्तः। तथा सति यथा-कथञ्चित् शास्त्रमर्यादा च रक्षिता भवतीति तेषामाशायः। अत्र पराशरः "दिन-त्रयेण शुध्यन्ति ब्राह्मणाः प्रेतसूतक इति। एतद्व्याख्याने माधवाचार्यः—"विप्रेषु त्र्यहाशौचश्च समानोदकविषयत्वात्। तथाच मनुः "त्र्यहस्तूदकदायिनः" इति। ननु क्षत्रियो द्वादशाहेन इत्येतदप्यनेकस्मृतिविरुद्धम्। तत्र शातातपस्त्वेकादशाहमाह—एकादशाहाद् राजन्यो वैश्यो द्वादशभिस्तथा। शूद्रो विंशतिरात्रेण शुध्यते मृतसूतके॥ वृद्धपराशरोऽपि "क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिः। तथैव द्वादशाहेन वैश्यः शुद्धिमवाप्नुयात्।" इति। अत्रोच्यते विद्यातपसोस्तारतम्येन विरोधः समाधेयः। यावद् यावद् विद्यातपसी विवर्धेते तावत् तावदशौचं सङ्कुच्यते। अतएव याज्ञवल्क्यो न्यायवर्तिनः शूद्रस्याप्यर्धमशौचमाह—क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु। विंशद्दिनानि शूद्रस्य तदर्धं न्यायवर्तिनः॥ इत्यादि क्रमेण विचार्य स्वाध्यायवृत्त-सापेक्षमघसङ्कोचनं तथा" इत्याद्युपक्रम्य "कलौ युगे त्विमान् धर्मान् वर्ज्यानाहु-र्मनीषिणः" इत्यभिहितम्। तथापि शिष्टाचारदेशाचारप्राबल्यादुत्कलाचारपरायणैः सर्वैःवर्णैर्दशाहाशौचं क्रियते इति सर्वमवदातम्।

नवमादिमासजातमृतौ कौर्मे—

जातमात्रस्य बालस्य यदि स्यान्मरणं पितुः ।

मातुश्च सुतकं तत् स्यात् पिता त्वस्पृश्य एव च ॥ ८३ ॥

सद्यःशौचं सपिण्डानां कर्तव्यं सोदरस्य च ॥ ८३ ॥ (कूर्मपुराणम्)

अत्र पित्रोर्दशरात्रं सपिण्डानां सद्यः । वचनात् पितुरप्यङ्गाशौचं दशाहान्तम् । जमलजननेऽप्येकस्य जीवनेऽन्यस्य मृतौ अयमेव न्यायः । एकस्य मृतजननेऽन्यस्य जातमृतो पित्रोर्दशाहम् । सपिण्डानां सद्यःशुद्धिर्मृतेर्वलीयस्त्वात् । गर्भस्रावेषु पितुःस्नानमात्रम् । "सूतिकां पुत्रवतीं विंशतिरात्रेण कर्म कारयेत् । मासेन स्त्रीजननीम् ।" पुत्रवतीं पुरुषजननीम् ।

बालाद्यशौचम् । कौर्मे—

अजातदन्तमरणे पित्रोरेकाहमिष्यते ।

जातदन्ते त्रिरात्रं स्यादितिशास्त्रविनिश्चयः ॥ ८४ ॥

सपिण्डानां तु याज्ञवल्क्यः,

आदन्ताज्जन्मनः सद्य आचूड़ान्नैशिकी मता ।

त्रिरात्रमाव्रतादेशाद् दशरात्रमतःपरम् ॥८५॥

द्विसन्ध्यं सद्य इत्याहुस्त्रिसन्ध्यमहरुच्यते ।

एकरात्रिर्दिने द्वे च पक्षिणीत्यभिधीयते ॥८६॥

समाचारात्तु सद्यःशोचे स्नानमात्रं कुर्वन्ति । अत्र दन्तजन्मादयः कालोपलक्षका इति लक्ष्मीधरः । षन्मासो दन्तजन्मकालः । अत्र दन्तानुत्पत्तावपि वालमरणेऽहरशौचम् । एवं तृतीयाब्दश्चूड़ाकालः । अतः चूड़ाया अकरणेऽपि त्रिरात्रम् । प्रथमवर्षस्य चूड़ाकालत्वेऽपि दन्तजननान्तरं तत्र चूड़ाकरणाभावे एकरात्रम् । दन्तजातेत्वकृतचूड़ेऽहोरात्रमिति स्मृतेः ।

### प्रभा

इत्यादिनेति । "त्र्यहात् केवलवेदज्ञो निर्गुणो दशभिर्दिनैः । सम्पर्कविनिवृत्तानां न प्रेतं न च सूत्रक"मित्यादिपदग्राह्यम् । एवञ्च सगुणनिर्गुणादिभेदेन अघवृद्ध्यादिहेतुना चाशौचवृद्धिसङ्कोचादि कलौ न कर्तव्यमिति प्रतीयते ।

यद्यप्यकृतचूड़ोऽपि जातदन्तश्च संस्थितः ।
दाहयित्वा तथाप्येनमशौचं त्र्यहमाचरेत् ॥८७॥

इत्यङ्गिरःस्मरणं त्रिवर्षचूड़ाकरणाभावे बोध्यम् । एवं द्विमासाधिकषड्वर्षादूर्ध्वमुपनयनकालः । तत्रोपनयनाभावेऽपि सम्पूर्णाशौचम् ।

तथा च ब्राह्मे—

अनुपनीतविप्रस्तु राजा चैवाधनुर्धरः ।
अगृहीतप्रतोदस्तु वैश्यः शूद्रस्त्ववस्त्रधृक् ॥८८॥
म्रियते यत्र तत्र स्यादशौचं त्र्यहमेव हि ।
द्विजन्मनामयं कालस्त्रयाणां तु षड़ाब्दिकः ॥
पञ्चाब्दिकस्तु शूद्राणां स्वजात्युक्तमतःपरम् ॥८९॥

गर्भाष्टमवर्षे ब्राह्मणादित्रयाणामुपनयन-धनुर्ग्रहण-प्रतोदग्रहणकालः । शूद्रस्य षष्ठे वस्त्रग्रहणकालः । ततः पूर्वं बालमृतौ त्रिरात्रम् । तदूर्ध्वं बालमरणे सम्पूर्णाशौचमित्युक्तम् । एवमुपनयनस्य कालोपलक्षकत्वमुक्तं भवति । एवं दन्तजन्मादिषु बोध्यम् । यदि तु चतुर्थपञ्चममासे दन्तजन्म दृश्यते चूड़ोपनयनयोरपि निमित्तान्तरे स्वकालात् पूर्वं करणम् ।

ब्रह्मवर्च्चसकामस्य कार्यं विप्रस्य पञ्चमे ।
व्रतचूड़द्विजानां तु प्रतीतिषु यथाक्रमम् ॥
दशाहस्त्र्यह एकाह शुद्ध्यन्त्यपि हि निर्गुणाः ॥९०॥ (जावालिः)

इत्यकालेऽपि तत्प्रतीतौ यथोक्ताशौचम् । अद्विवर्षस्य दाहः पाक्षिकः । दाहपक्षे उदकदानमपि । द्विवर्षादूर्ध्वं दाहनियमः ।

कन्याशौचम् ।

अजातदन्तमरणे पित्रोरेकाहमिष्यते ॥९१॥

दन्तजननोर्ध्वम् । तथाच स्मृत्यन्तरे—

अप्रत्तासु च प्रत्तासु संस्कृतासंस्कृतासु च ।
मातापित्रोस्त्रिरात्रं स्यादितरेषां यथाविधि ॥९२॥

कन्यामरणाधिकारे, कौर्मे—

आदन्तात् सोदरे सद्य आचूड़ादेकरात्रकम् ।
आप्रदानात् त्रिरात्रं स्यादिति शास्त्रविनिश्चयः ॥ ९३ ॥

सपिण्डानां तु, ब्राह्मे —

आजन्मनस्तु चूड़ान्तं सद्यःशौचं विधीयते ।
ततो वाग्दानपर्यन्तं यावदेकाहमेव च ।
अतःपरं प्रवृद्धानां त्रिरात्रमिति निश्चयः ॥ ९४ ॥

वाग्दानोत्कर्षे वाग्दानात्पूर्वं तत्कालेऽपि त्रिरात्रमित्यर्थः ।

वाग्दाने तु कृते तत्र ज्ञेयं चोभयतस्त्र्यहम् ॥ ९५ ॥

उभयतः पितृकुले भर्तृकुले च ।

पाणिग्रहणिका मन्त्राः पितृगोत्रापहारकाः ।
भर्तृगोत्रेण नारीणां देयं पिण्डोदकं ततः ॥९६॥

एवं सप्तपदीकरणानन्तरं तत्पूर्वं त्रिरात्रमुभयत्र । समानजातीयाशौचसन्निपाते जननाशौचमध्ये यद्यपरं जननं स्यात् पूर्वाशौचव्यपगमे शुद्धिः । रात्रिशेषे द्वाभ्यां प्रभाते दिनत्रयेण । अशौचमध्ये ज्ञातिमरणेऽप्येवम् । अशौचमध्ये ज्ञातिमरणे मृतकान्तरेऽपि शुद्धिः । रात्रिशेषे द्वाभ्यां प्रभाते दिनत्रयेण । रात्रिशेषो दशाहः प्रभातपदेन तदहः कल्प्यः । एवं दशमेऽहनि तदुषषि स्वजातीयनिमित्तश्रवणे द्वित्रिदिनवृद्ध्या शुद्धिर्यद्यपि स्मृतिषु विहिता तथापि—

न वर्धयेदघाहानि निमित्तादगतादपि ॥९७॥

इति मनुना निषिद्धा । तदुक्तं भट्टैः—

**प्रभा**

जावालिवचने द्विजानामिति—दन्तानामित्यर्थः । वाग्दाने तु कृते इत। साम्प्रतं वाग्दानव्यवहाराभावात् भर्तृकुलेऽशौचं न परिपाल्यते इति । अत्र गदाधरकृतसंक्षेपः—

पित्रोः पुत्रीमृतावारदनमहरतः सर्वदोर्ध्वं त्र्यहं स्यात्
भ्रातुःस्नानं तथाहस्त्रच हमपिरदनात् क्षौरतः प्राक् विवाहात् ।
ज्ञातेः लद्यः क्षुरात् प्रागहरुपरि च वाग्दानकाले त्र्यहं स्याद्
वाग्दानेऽनुष्ठिते तु त्रयहमुभयकुले चेद्द विवाहो न पित्र्ये ॥

अथवान्तर्यदाशौचनिमित्तं किञ्चिदापतेत् ।
तच्छेषेण विशुद्धिः स्यात् तच्छेषोऽयं भविष्यति ॥
न वर्धयेदघाहानि निमित्तादागतान्यपि ॥९८॥

तथाच विहितप्रतिषेधाद् विकल्पः। विकल्पे च सति यथा देशाचारं व्यवस्थेति। अस्मद्देशे दशाहस्तत्प्रभातश्रवणे द्वि-त्रिदिनबृद्धिर्नाद्रियते।

परतः परतः शुद्धिरघबृद्धौ विधीयते।
स्याच्चेत् पञ्चतमादह्नः पूर्वेणाप्यनुशिष्यते ॥९९॥ (देवलः)

इत्येतदपि "न बर्धयेदघाहानि" इत्यनेन निषिद्धत्वाद् "वैकल्पिकं यथाचारं देशेषु व्यवस्थितमिति" नास्मद्देशे विचार्यते। ततोऽन्तरङ्गगुणवद्भावेन शुद्धिविचारः कलौ नास्तीत्यप्याहुः। तथा च षट्त्रिंशन्मतम्—

अनिर्दशाहे जनने पश्चात् स्यान्मरणं यदि।
प्रेतमुद्दिश्य कर्तव्यं तत्राशौचं स्वबन्धुभिः ॥१००॥
मरणोत्पत्तियोग तु गरीयो मरणं भवेत्।
शावेन शुध्यते सूतिर्न सूतिः शावशोधिका ॥ १०१ ॥

तदेतत् सर्वमालोच्य उक्तम्—दीर्घाल्पाप्यपरापरापि सततं सूतेर्मृतिशोधिका।

स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद् यदि।
न च पूर्वेण शुद्धिः स्यात् स्वकालेनैव शुध्यति ॥१०२॥

इत्युशनसोक्तं स्वजातिविषयम्।

सूतकाद्विगुणं शावं शावाद्द्विगुणमार्तवम्।
आर्तवाद्द्विगुणा सूतिस्ततोऽपि शवदाहकः ॥१०२॥

शवदाहको दाहादिप्रेतकर्मकर्ता। "शेषाहोभिर्विशुध्यत उदक्यां सूतिकां

**प्रभा**

परतः परतः शुद्धिरिति देवचनस्यायमर्थः—पञ्चतमादह्नः परतः पञ्चमदिवसानन्तरं सजातीयाशौचबृद्धौ सत्यां परतः परेणाशौचेन शुद्धिः। पञ्चदिवसात् पूर्वं सजातीयाशौचबृद्धौ पूर्वेणाशौचेन शद्धिर्विधीयत इति। तथाच "पूर्वेण" इत्येतत्पदमावृत्त्या

विना।" सर्वत्र पूर्वाशौचेन शुद्धो सूतिकां रजस्वलां क्रियाकर्तारं च त्यक्त्वाऽन्येषां शुद्धिरित्यर्थः।

देशान्तरगतं श्रुत्वा सूतकं शावमेव च।
तावदप्रयतो मर्त्यो यावच्छेषं समाप्यते ॥१०३॥

शेषमशौचदिनशेषम्।

यत्तु "अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेदि"त्यादिकं, तदस्मद्देशे समाचाराभावान्न व्यवस्थाप्यते। अतएव विज्ञानेश्वरेण "नानादिवसशोधक-वाक्यान्युदाहृत्य समाचाराभावादेतानि न व्यवस्थाप्यत" इत्युक्तम्।

पित्राद्यशौचे विशेषः। आग्नेये—

पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः।
श्रुत्वा तद्दिनमारभ्य दशाहं मृतकी भवेत् ॥१०४॥
पितृमात्र्युपघाते तु आर्द्रवासा ह्युपोषितः।
अतीतेऽब्देऽपि कुर्वीत प्रेतकार्यं यथाविधि ॥१०५॥
मातर्यग्रे प्रमृतायामशुद्धौ म्रियते पिता।
पितुः शेषेण शुद्धिः स्यान्मातुः कुर्याच्च पक्षिणीम् ॥१०६॥

मातरि मृतायां पश्चात् पितुर्मरणे उत्तरभाविनापि पितृमरणेनैव शुद्धिः। द्वयोरेकादशाहकृत्यं पितुरेकादशाहे कार्यम्। पितृमरणाशौचमध्ये पश्चान्मातृ-मरणे पितुरशौचं समाप्य पश्चात्पक्षिणीं प्रक्षिप्य शुद्धिः। न पूर्वमात्रशेषेण। दशाहानन्तरं पक्षिणीं समाप्य द्वयोरेकादशाहकृत्यं कार्यमिति विज्ञानेश्वरः। शुद्धिचन्द्रिकाकारेण—"सर्वाशौचविशोधकं गुरुतरं पित्रोरशौचं ध्रुवम्।
पूर्वं वा परतोऽथवैवमनयोर्मातुः पिता शोधकः।"

इत्युक्तवता पक्षिणीप्रक्षेपस्तु नोक्तः। अस्मद्देशे समाचारोऽप्येवमेव।

पितृपत्न्यामतीतायां मातृवर्जं द्विजोत्तम।
संवत्सरव्यतीते तु त्रिरात्रमशुचिर्भवेत् ॥१०७॥ (दक्षः)

प्रभा

व्याख्येयमिति। इत्यादीन्यपि "न वर्षयेदघाहानि" इत्यनेन निषिद्धत्वात् वैकल्पिकानि यथा देशाचारं व्याख्येयानि। उत्कले देशे तादृशव्यवाराभावान्नात्र विचार्यन्ते।

संवत्सरात् पूर्वं दशरात्रमित्यर्थः ।

अथ त्रिरात्राशौचम् ।

"एकाहमसपिण्डत" इत्युपनीतपरम् । समानोदकानां त्र्यहम् । प्रत्तानां स्त्रीणां त्रिरात्रमशौचम् । पित्रोरित्यर्थः । पित्रोर्मरणे विवाहितानां दुहितृणां त्रिरात्रम्, यत्तु—"दत्ता नारी पितुर्गेहे सूयते म्रियतेऽथवा ।

तद्बन्धुवर्गस्त्वेकेन शुध्यते जनकस्त्रिभिः ॥१०८॥

इति वचनं तद् वाजपेयिभिरलिखितत्वान्नाद्रियते । यानि तु असगोत्राणां त्रिरात्र-पक्षिण्येकरात्राद्यशौचविधायकानि सद्यः शौचविधायकानि तानि वाक्यानि तानि अस्मद्देशे समाचाराभावान्न व्यवस्थाप्यते ।

प्रोषितस्य मरणनिर्णयः ।

गतस्य न भवेद् वार्ता यस्य द्वादशवार्षिकी ।
प्रेतावधारणं तस्य कर्तव्यं सूतबान्धवैः ॥१०९॥

एतत् पितृव्यतिरिक्तविषयम् । पितृविषये तु विशेषः—

पितरि प्रोषिते यस्य न वार्ता नैव चागतः ।
ऊर्ध्वं पञ्चदशाद् वर्षात् कृत्वा तत्प्रतिरूपकम् ॥११०॥
कुर्यात् तस्य च संस्कारं यथोक्तविधिना ततः ।
तदानीमेव सर्वाणि प्रेतकार्याणि सञ्चरेत् ॥ १११ ॥
आषाढे कृष्णपक्षस्य तिथिरेकादशी तु या ।
तदारभ्यैव कर्तव्याः पिण्डदानोदकक्रियाः ॥ ११२ ॥

## प्रभा

यत्त्विति । अतिक्रान्ताशौचं तु मृताशोचपरम् । तच्च न्याय्यमेव संवत्सरातीते त्रिरात्रमशौचधारणं किन्तु "यस्मिन् देशे य आचारः पारम्पर्यक्रमागतः । तत्र तन्नावमन्तव्यो धर्मस्तत्र हि तादृशः" इत्यादिवचनाद्देशाचारं प्रमाणीकृत्याह "समाचाराभावादिति । एवमघबृद्धिमदशौचस्थलेऽपि बोद्धव्यम् । एवञ्च यत्त्विति— "दत्तानारी पितुर्गेहे सूयते म्रियतेऽथवा" इत्यादिवचनानि देशाचारविरुद्धत्वान्नादरणीयानीति ग्रन्थकर्तुराशयः । अन्तरङ्गगुणवद्भावेनशुद्धिविचारो न कलावस्तीत्यप्याहुः ॥

अथ पर्णनरदाहविधिः ।

अस्थ्नश्चामलाभे पर्णानि सकलान्युर्णया वृता ।
दाहयेदस्थिसंख्यानि ततः प्रभृति सूतकम् ॥ ११३ ॥

दाहादूर्ध्वमाहिताग्नेरशौचमित्यस्यैवानुवादः । ततः प्रभृति सूतकम् ।

एवं पर्णनरं दग्ध्वा त्रिरात्रमशुचिर्भवेत् ॥ ११४ ॥

दाहदिनादारभ्य त्रिरात्रमशौचं कर्तव्यमित्यर्थः । इदं दशरात्राशौचबाधकम् । केवलं निरग्नेर्दशाहमध्ये पर्णनरदाहे मरणज्ञानावधिकस्याशौचस्य न बाधकम् । तस्य दशाहोर्ध्वपतितपर्णदाहस्यावकाशत्वेन भिन्नविषयतया बाधकत्वासम्भवात् । श्रौताग्नेस्तु दाहावध्यशौचस्य समानत्वाद् बाधकम् । अस्थिसंख्या षष्ठ्यधिक-शतत्रयम् ।

तदभावे पलाशोत्थैः पत्रैः कार्यः पुमानपि ।
शतैस्त्रिभिस्तथा कार्या शरपत्रैर्विधानतः ॥११५॥
वेष्टितव्या तथा यत्नात् कृष्णसारस्य चर्मणा ।
ऊर्णासूत्रेण बद्ध्वा तु प्रलेप्तव्यस्तथा यवैः ॥ ११६ ॥
संपिष्टैर्जलसंमिश्रैर्दग्धव्यश्च तथाग्निना ।
असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा स्वबान्धवैः ॥ ११७ ॥
(आदिपुराणम्)

तदलाभेऽस्थ्नामलाभे पलाशवृन्तानां त्रीणि षष्ठिशतानि (षष्ठ्युत्तरत्रिशतैः) पुरुषप्रतिनिधिं कृत्वा—

अशीत्यूर्ध्वं तु शिरसि ग्रीवायां दश योजयेत् ।
उरसि त्रिंशतं दद्याद् विंशतिं जठरे तथा ॥ ११८ ॥

**प्रभा**

तत्प्रतिरूपकमिति पर्णनरमित्यर्थः । अयं दाहः साग्निनिरग्निसाधारणः । पर्णं नरं सम्पाद्य पूर्ववद्वस्तूदरे चन्दनादिवस्त्रयज्ञोपवीतमाल्यघृतादि दत्त्वा आज्येन तृणमादाय प्रदक्षिणं कृत्वा मुखाग्निमन्त्रेणापसव्यस्तमग्निं शिरःस्थाने निरग्नेर्दद्यात् । त्रिभिरश्वत्थपत्रैर्दर्भत्रयेण घृताक्तेन अग्निं प्रज्वाल्य शिरःस्थाने दद्यात् । एवं दाहे कृते तूष्णीमुदकधारां परितो दद्यात् । एतस्मिन्नशौचे त्रिदिनाशौचवत् पिण्डव्यवस्थां वक्ष्यति—'प्रथमे दिवसे देया' इत्यादि ।

बाहुभ्यां च शतं दद्याद् दद्यादङ्गुलिषु दश।
द्वादशार्धं वृषणयोरष्टार्धं शिश्न एव च ॥ ११९ ॥
ऊरुभ्यां तु शतं दद्याद् त्रिशतं जानुजङ्घयोः।
पादांगुलिषु च दश एतत् प्रेतस्य लक्षणम् ॥ १२० ॥

(आश्वलायनगृह्यपरिशिष्टम्)

यज्ञपात्रं ततो न्यसेत्। "ऊणासूत्रेण संवेष्ठ्य यवपिण्डेन लेपयेत्। षष्ठिशतानि षष्ठ्यधिकशतानि। त्रिशतं जानुजंघयोर्मध्य इति शेषः। सवृन्तपलाशपत्रमय-प्रतिकृतिः शरपत्रैः कृष्णमृगचर्मणा ऊर्णासूत्रेण वा वेष्ठयित्वा यवैर्जलमिश्रैः प्रलिप्य दग्धव्येत्यर्थः।

त्रिदिनाशौचे पिण्डदानव्यवस्था।

प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः।
द्वितीये चतुरो दद्यादस्थिसञ्चयनं तथा॥
त्रीन् प्रदद्यात् तृतीयेऽह्नि वस्त्रादिक्षालनं तथा ॥१२१॥

इति। त्र्यहाशौचे द्वितीयेऽह्नि कर्तव्यस्त्वस्थिसञ्चयः।

सद्यःशौचे तत्क्षणं तु कर्तव्य इति निश्चयः ॥ १२२ ॥

अस्थिलाभे तु अस्थिदाहः।

विदेशमरणेऽस्थीनि आहृत्याभृज्य सर्पिषा।
दाहयेदूर्णयाच्छाद्य पात्रन्यासादिपूर्ववत् ॥ १२३ ॥

गङ्गायामस्थिप्रक्षेपविधिः।

यावदस्थि मनुष्यस्य गङ्गाम्भसि च तिष्ठति।
तावद् वर्षसहस्राणि स्वर्गलोके महीयते ॥ १२४ ॥
मातृकुलं पितृकुलं वर्जयित्वा नराधमः।
अस्थीन्यन्यकुलस्थस्य नीत्वा चान्द्रायणं चरेत् ॥ १२५ ॥

### प्रभा

अस्थानमलाभे इति। अस्थिनाशे इत्यर्थः। पलाशवृन्तानां सवृन्तपलाश-पत्राणामित्यर्थः। अस्थिलाभे तु अस्थिदाहः इत्यादि तु साग्नेरेवास्थिदाहः। "पात्र-

अस्थीनि मातापितृपूर्वजानां
नयन्ति गङ्गाम्भसि ये कदाचित्।
सद्भावकस्यापि दयाभिभूता-
स्तेषां तु तीर्थानि फलप्रदानि ॥ १२६ ॥

सद्भावकस्य शुद्धभावस्य अतिसुहृद इति यावत् ।

स्नात्वा ततः पञ्चगव्येन सिक्त्वा
हिरण्यमध्वाज्यतिलैश्च योज्य ।
ततस्तु मृत्पिण्डपुटे निधाय
पश्यन् दिशं प्रेतगणोपगूढान् ॥ १२७ ॥
नमोऽस्तु धर्माय इति वदन् प्रविश्य
जलं स मे प्रीत इति क्षिपेच्च ।
उत्थाय भास्वन्तमवेक्ष्य सूर्यं
सदक्षिणां विप्रमुख्याय दद्यात् ॥ १२८ ॥

एकादशाहे वृषोत्सर्गः ।

एकादशाहे प्रेतस्य यदि नोत्सृज्यते वृषः ।
प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥ १२९ ॥
एकादशाहे प्रेतस्य यदि चोत्सृज्यते वृषः ।
मुच्यते प्रेतभावात् स षण्मासे चाब्दिकादिषु ॥ १३० ॥
यदि पुत्रवती नारी म्रियते पत्युरग्रतः
वृषं नैवोत्सृजेत् तस्या यावत् तिष्ठति तत्पतिः ॥
उत्सृजेत् पितरि प्रेते वृषं मातुर्न जीवति ॥ १३१ ॥

एकादशाहे श्राद्धम् ।

**प्रभा**

न्यासादिपूर्ववदित्यत्र पात्रन्यासविधिश्रुत्या साग्निकविषयत्वप्रतीतेः । अनग्निकस्या-स्थिलाभे गङ्गाजलादौ प्रक्षेपमात्रम् । पर्णनरदाहे नाशौचं "दग्ध्वा त्रिरात्रमशुचि-र्भवेदि"त्यत्र दाहकर्तुरेवाशौचप्रतीतेः ।

द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा ।
सपिण्डीकरणं चैव प्रेतश्राद्धानि षोड़श ॥ १३२ ॥

आद्यमेकादशाहश्राद्धम् । षाण्मासिके षष्ठमास-संवत्सरयोः पूर्वदिनविहितश्राद्धे ।

एकादशे त्रिपक्षान्ते षण्मासे त्वाब्दिकेऽपि च ।
प्रतिमासं मृताहे च श्राद्धान्येतानि षोड़श ॥ १३२ ॥
द्वादशप्रतिमास्यानि आद्यं षाण्मासिके तथा ।
त्रैपक्षिकाब्दिके चैव श्राद्धान्येतानि षोड़श ॥ १३४ ॥
आद्यश्राद्धे त्रिपक्षे वा मासि मासि च वत्सरे ।
वृषोत्सर्गश्च कर्तव्यो यावन्नास्ति सपिण्डता ॥ १३५ ॥

इति दान कौमुद्याम् । इति मतान्यरेऽपि सपिण्डीकरणं विहाय त्रैपक्षिकमादाय षोड़शश्राद्धानि गणितानि ।

यद्येतानि न कुर्वीत प्रेतश्राद्धानि षोड़श ।
पिशाचत्वं ध्रुवं तस्य दत्तैः श्राद्धशतैरपि ॥ १३६ ॥
मृतेऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् ।
प्रतिसंवत्सरं चैक्माद्यमेकादशेऽहनि ॥ १३७ ॥

इति वचनान्मासिकानि मृताहदिने आद्यश्राद्धमेकादशाहदिने ।

### प्रभा

उत्सृजेदिति । पितरि प्रेते वृषमुत्सृजेत् । पितरि जीवति मातुर्वृषं नोत्सृजेदित्यर्थः । तदयं सक्षेपः—एकादशाहे एव मुख्यतया वृषोत्सर्गः कर्तव्यः । तद्दिनेऽकरणे दोषश्रुतेस्तद्दिनकर्तव्यत्वेन तस्य नित्यत्वम् । त्रैपक्षिकादावगतिक एव तथाचरणम् । "पतिपुत्रवती नारी म्रियते भर्तुरग्रतः । चन्दनेनाङ्कितां धेनुं दद्यात् तस्याः प्रमुक्तये ॥ अपुष्पिता (निवृत्तरजस्का) मृता काचित् तस्या धेनुर्विगर्हिता" ॥ इत्यादिप्रामाणिकवचनजातैर्निर्णीयते यत् पुरुषाणां सर्वदैव वृषोत्सर्गः । पतिपुत्रवतीनामनिवृत्तरजस्कानां चन्दनधेनुदानम् । अन्यासामपि नारीणां वृषोत्सर्गः । चन्दनधेनुदानस्थले बहुपुत्रपक्षे श्राद्धकर्ता ज्येष्ठ एव चन्दनधेनुदानं कुर्यात् । अन्ये पुत्राः समर्थश्चेत् वृषोत्सर्गं कुर्युः, न चन्दनधेनुदानम् । एवमेव समुदाचारोऽपि । एकादशे इत्यादि । अत्र त्रैपक्षिकश्राद्धप्रवेशेऽपि कथं षोड़शश्राद्धानीति नाशङ्कनीयम् । "षण्मासे षाण्मासिके" इत्यादिदर्शनात् प्रथमषाण्मासिकद्वितीयषाण्मासिकयोः षाण्मासिकत्वपुरस्कारेण एकत्वनिर्णयादन्यथा सप्तदशश्राद्धानि स्युः । यत्र च त्रैपक्षिकश्राद्धाभावस्तत्र सुतरां षोड़शश्राद्धानि गणनयैव प्राप्तानि । एतन्मते सपिण्डीकरणं विहाय षोड़शश्राद्धानि गणितानि । सपिण्डकरणस्य प्रेतत्वविमुक्तिपूर्वकपितृत्वप्रापकत्वान्न तस्य सम्यक् प्रेतश्राद्धत्व-

ऊनान्यूनेषु मासेषु विषमाहे समेऽपि वा ।
त्रैपक्षिकं त्रिपक्षे स्यान्मृताहे त्वितराणि तु ॥ १३८ ॥

षष्ठे याण्मासिकं कुर्याद् द्वादशे मासि चाब्दिकम् ।
त्रैपक्षिकं भवेद् वृत्ते त्रिपक्षे तदनन्तरम् ॥ १३९ ॥

षाण्मासिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते ।
मासिकानि स्वकीये तु दिवसे द्वादशेऽपि च ॥ १४० ॥

यत्र वा तत्र वा मासि षष्ठे षाण्मासिकं भवेत् ।
त्रैपक्षिकं त्रिपक्षे तु वृत्ते स्यात् तदनन्तरम् ॥ १४१ ॥

वृत्ते निवृत्ते । यत्र वा तत्र वेति मलीम्लुचे शुद्धे वापि । तदनन्तरं षट् चत्वारिंशेऽह्नि त्रैपक्षिकमित्यर्थः । इत्याद्यनेकवाक्यपर्यालोचनया त्रिपक्षश्राद्धे मृततिथ्यादरो नास्ति । षट्चत्वारिंशद्दिवस एव तस्यानुष्ठानम् । आहिताग्नेः पुनस्त्रिपक्षावधि यत् प्रेतकर्म तद्दादशदिवसादारभ्य कार्यम् । तदाह जातुकर्णः—

ऊर्ध्वं त्रिपक्षाद् यच्छ्राद्धं मृताहन्येव तद् भवेत् ।
अधस्तात् कारयेद्दाहादाहिताग्नेर्द्विजन्मनः ॥ १४२ ॥

एतद्वचनबलाद् दाहदिनमारभ्य एकादशाहदिने आद्यश्राद्धम् । षटचत्वारिंशद्दिने त्रैपक्षिकश्राद्धम् । दाहतिथौ प्रथममासिकश्राद्धमित्यर्थः ।

त्रिपक्षात् पूर्वतः साग्नेर्भवेत् संस्कारवासरे ।
ऊर्ध्वं मृतदिनेऽनग्नेः सर्वाण्येव मृतेऽहनि ॥ १४३ ॥

इति । त्रिपक्षादिति ल्यप्लोपे पञ्चमी । त्रिपक्षमारभ्य इत्यर्थः ।

द्वादशमासेऽधिमासपाते—

श्राद्धमग्निमतः कार्यं दाहादेकादशेऽहनि ।
ध्रुवाणि तु प्रकुर्वीत प्रमितेऽहनि सर्वदा ॥ १४४ ॥

एतद्वचनमपि एतद्वचनसमानार्थतया उपलक्षणत्वेन व्याख्येयम् ।

एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः ।
न्यूनाः संवत्सरश्चैव स्यातां षाण्मासिके तदा ॥ १४५ ॥

"षाण्मासिकाब्दिके श्राद्ध" इति उनषाण्मासिकोनाब्दिके षण्मासद्वयान्तक्रियमाणतया षाण्मासिक इति। द्वितीयस्य तु आब्दिक इति विशेषसंज्ञा।

पूर्वेद्युराब्दिकं श्राद्धं परेद्युः पुनराब्दिकम् ॥ १४६ ॥

इति शङ्खवचनात्। तत्र प्रथमषण्मासाभ्यन्तरे मलमासपातेऽपि षष्ठमासपूर्वतिथिरेव प्रथमषाण्मासिकस्य कालः। "यत्र वा तत्र वा मासीति" वचनेन तस्य षण्मासपूर्वदिने विधानात्। द्वितीयषाण्मासिकस्य संवत्सरपूर्वदिने विधानात्। तन्मध्ये मलमासपाते तु त्रयोदशमासपूर्वतिथिरेव। संवसरश्च क्वचित् त्रयोदशभिर्मासैरपि भवति। 'द्वादशमासाः क्वचित् त्रयोदशमासाः संवत्सरः' इति श्रुतेः। यस्मिन् मलमासे मृताहः पतति तद्दिने मलमासविहितं श्राद्धं कुर्यात्।

संवत्सरस्य मध्ये तु यदि स्यादधिमासिकम्।
तदा त्रयोदशे मासि कार्या प्रेतस्य सत्क्रिया ॥ १४७ ॥
तदा द्वादशके श्राद्धं कार्यं तदधिकं भवेत्।

इति। अधिमासे तु यच्छ्राद्धं कुर्यात् तदधिमासिकम् ॥१४८॥ इति।

शुद्धमासमृतानां तु मलिने प्रथमाब्दिकम्।
मलमासमृतानां तु मले स्यादाब्दिकान्तरम् ॥ १४९ ॥

इति माधवाचार्योक्तव्यवस्थया द्वादशमासमृताहपूर्वदिने द्वितीयषाण्मासिकं कृत्वा परदिनेऽधिमासविहितश्राद्ध-द्वादशमासिकसपिण्डीकरणानि कुर्यादिति।

नवश्राद्धं मासिकं च यद्यदन्तरितं भवेत्।
तदुत्तरस्य स्वातन्त्र्यादनुष्ठेयं प्रचक्षते ॥ १५० ॥

अन्तरितम् अकृतम्। स्वातन्त्र्यात् समानतन्त्रत्वात्।

प्रभा

मिति भावः। ऊनान्यूनेष्विति। प्रतिमासिकं श्राद्धं मृततिथावेव कर्तव्यम्। तत्र गणनया त्रिंशद्दिनस्यावश्यकता नास्ति। त्रैपक्षिकं श्राद्धं तु त्रिपक्षे पञ्चचत्वारिंशद्दिवसे वृत्ते गते षष्ठचत्वारिंशेऽह्नि प्राप्ततिथौ कर्तव्यम्। तत्र मृततिथिप्राप्तेः सम्भावनाभावान्न मृततिथेरपेक्षा कार्येति भावः। संस्कारवासरे इति दाहतिथौ।

एकोद्दिष्टे तु संप्राप्ते यदि विघ्नः प्रजायते ।
मासेऽन्यस्मिन् तिथौ तस्मिन् कुर्यादूर्ध्वं मृतेऽहनि ॥ १५१ ॥

अन्तरितं तदा अन्तरितमासिकमुत्तरमासिकञ्च उत्तरमासमृताहे पृथक् कुर्यादित्यर्थः । अशौचेन विघ्ने तु—

मासिकार्थे तु संप्राप्ते कदाचिन्मृतसूतके ।
वदन्ति शुद्धौ तत्कार्यं दर्शे वापि मणोषिणः ॥ १५२ ॥

मासिकार्थ इति मासभवोऽर्थः । प्रेताप्यायनादिस्तद्रूपे प्रतिमासविहित-एकोद्दिष्ट इति यावत् । एतदुपलक्षणम् । एकादशाहादि-त्रिपक्षोनषण्मासोनाब्दिकसपिण्डीकरणेष्वप्येवम् ।

यत्तु—"आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि ।
कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥ १५३ ॥

## प्रभा

मलमासमृतानामिति । "मलमासमृतानां तु श्राद्धं यत् प्रतिवत्सरम् । मलमासेऽपि कर्तव्यं नान्येषां तु कदाचन ॥ इति पैठीनस्युक्तेर्यो यस्मिन् मलमासे मृतः कालान्तरे तस्मिन्नेव मलमासे सति तस्यैव तत्रापि श्राद्धं कर्तव्यमित्यर्थः । 'एकोद्दिष्टे तु संप्राप्ते' इति । प्रेतैकोद्दिष्टेऽपि संप्राप्ते यदि विघ्नः समुत्पद्येत तदा तदपरस्मिन् मासे मृततिथौ पूर्वं पतितैकोद्दिष्टं कृत्वा प्रकृतं मासिकं कर्तव्यम् । षोड़शश्राद्धानां क्रमलङ्घने दोषश्रवणात् । पार्वणकुलोत्पन्नानां प्रेतैकोद्दिष्टं विना एकोद्दिष्टाभावात् सुतरामेव तथा व्याख्येयम् ।

तुल्यकक्षानामित्ति । समानबलानामाद्यश्राद्धादिसपिण्डीकरणान्तां षोड़शश्राद्धानां मध्ये दैवादेकस्याप्यकरणे "यस्यैतानि न दीयन्ते प्रेतश्राद्धानि षोड़श । पिशाचत्वं ध्रुवं तस्य दत्तैः श्राद्धशतैपि" ॥ इति वचनात् प्रेतत्वविमुक्तित्वावच्छिन्नं प्रति षोड़शश्राद्धत्वेनैव हेतुत्वात् प्रेतत्वविमुक्तेरभावाच्च पतितं यत्प्रेतश्राद्धं तदवश्यं कर्तव्यमेव । षोड़शश्राद्धासम्पत्तौ प्रेतत्वपरिहारजनकादृष्ठानुत्पत्तेर्दर्शापूर्ववत् प्रधानापूर्वानिष्पत्तेश्च । यथा ऐन्द्रं दधि अमावास्यायां इति दर्शे यागत्रयं पौर्णमास्याञ्चाग्नेयादित्रयं विहितं तत्र तत्र त्रिकात् त्रिकादेकैकमपूर्वं जायते, ततश्च "दर्शपौर्णमासाभ्यां स्वर्गकामो यजेते"ति फलापूर्वमेकं जायते । कस्याप्यनिष्पत्तौ प्रधानापूर्वानिष्पत्तेरिति भावः । न च तुल्यकक्षानामेकस्याकरणे "समाप्तौ यदि जानोयादिति" क्रमलङ्घनात् पुनस्तत एव कृतमपि मासिकं पतितमासिककरणान्तरं कर्तव्यं न वेति सन्देहे त्वाह "प्रधानस्येति" । अत्र चाङ्गाङ्गिभावाभावेऽपि क्रमलङ्घणदोषशान्त्यर्थं विष्णुस्मरणादिकमधिकं कर्तव्यम् । रघुनन्दनेनापि "षोड़शश्राद्धानां यत्पतितं कृष्णैकादश्यां तत्कर्तव्यमित्युक्तत्वात् ।

इति शङ्खवचनं द्वादशादिनाद्यशौचक्रियादिपरमिति विज्ञानेश्वरः ।

एकादशे नवश्राद्धे षन्मासे मासिकेऽपि च ।
आब्दिके च त्रिपक्षे च श्राद्धेऽतीते कथञ्चन ॥ १५४ ॥
कुर्यात् तत् क्रमशो दर्शे यद्वा कार्यवशाद् बुधः ।
एकदैव समाप्यं तत् सपिण्डीकरणान्तकम् ॥
समारभ्य विधानेन पक्वान्नेन समापयेत् ॥ १५५ ॥

इति । दैवात् कालेऽकरणे पश्चात् कर्तव्यत्वमेषां तेषां प्रेतसंस्कारकत्वात् । प्रेतश्राद्धानां मध्ये एकस्याकरणे पश्चात् तत् करणमावश्यकम् । तुल्यकक्षाणां षोड़शश्राद्धानामेकतमासिद्धौ षोड़शानामपूर्वाणामनुदये प्रधानापूर्वस्य दर्शापूर्ववदसिद्धेः ।

न च क्रमरूपाङ्गसिद्धौ कथमपूर्वोत्पत्तिरिति वाच्यम् । सर्वशक्त्यधिकरणे नित्यकर्मण्यङ्गानां यथाशक्त्यनुष्ठानस्य सिद्धान्तत्वात् । अतएव कात्यायनः ।

समाप्ते यदि जानीयान्मयैतदन्यथा कृतम् ।
तावदेव पुनः कुर्यान्नावृत्तिः सर्वकर्मणः ॥ १५६ ॥
प्रधानस्याक्रिया यत्र साङ्गं तत्क्रियते पुनः ।
तदङ्गस्याक्रियायां तु नावृत्तिर्न च तत्क्रिया ॥ १५७ ॥

## प्रभा

अशौचादिविघ्नपतितश्राद्धे तु विशेषमाह "वदन्ति शुद्धौ तत्कार्य"मिति । अत्र च स्मार्तधृतऋष्यशृङ्गवचनानि यथा—"देये पितॄणां श्राद्धे तु अशौचं जायते यदि । तदशौचे व्यतीते तु तेषां श्राद्धं विधीयते ॥ शुचीभूतेन दातव्यं या तिथिः प्रतिपद्यते । सा तिथिस्तस्य कर्तव्या न त्वन्या वै कदाचन" ॥ इत्यादिवचनपर्यालोचनयावबुध्यते यद् 'देये' विघ्नेऽपि अवश्यं देये । अत्रावश्यकार्थे कृत्यप्रत्ययः । एतेन महालया-दोषान्विताष्टकादेर्निरासः । अशौचादिना विघ्ने तेषां देयत्वाभावात् । 'शुचीभूतेन दातव्य'मित्यत्र दातव्यं श्राद्धपूज्यकालं मध्याह्नादिकं प्राप्य या तिथिः शुचीभूतेन प्राप्यते सा तिथिस्तस्य श्राद्धस्य कर्तव्या करणार्हा, न तु उदयकालप्राप्तसङ्गवाभ्यन्तर-समाप्यतिथौ तदानीं शुचीभूतेनापि श्राद्धयोग्यकालालाभात् ।'नत्वन्या वै कदाचने'ति—श्राद्धविघ्ने सूतकादिनिमित्तके न कृष्णैकादश्यादिप्रतीक्षणीयम् । एवञ्च क्षताशौचस्थले

न साङ्गं न प्रधानावृत्तिः। न च तावन्मात्राङ्गकरणं च। किन्तु वैगुण्यसमाधानार्थं विष्णुस्मरणम्।—

अज्ञानाद् यदि वा मोहात् प्रच्यवेताध्वरेषु यत्।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः॥ १५८॥
प्रकृतमन्यथा कुर्याद् यदि मोहात् कथञ्चन।
यतस्तदन्यथा जातं तदारभ्य समापयेत्॥ १५९॥

इति वचनं प्रयोगमध्य एव सुकरत्वे बोध्यम्।

न च— "सपिण्डीकरणे वृत्ते पृथक्त्वं नोपपद्यते।
पृथक्त्वे तु कृते पश्चात् पुनः कार्यं सपिण्डनम्॥१६०॥

इति वचनात् सपिण्डनानन्तरं पतितमासिककरणे पुनः सपिण्डीकरणप्रसङ्ग इति वाच्यम्। एतद्वचनस्य प्राप्तपितृलोकस्य शास्त्रोल्लंघनपूर्वकपृथक्करण-परत्वात्। इह तु षोड़शसंख्यकश्राद्धासम्पत्त्याप्राप्तपितृलोकस्य पितृलोकप्राप्त्य-सिद्धौ पृथक्करणे न दोषः।

मुख्यं श्राद्धं मासि मासि अपर्याप्तावृतुं प्रति।
द्वादशाहेन वा कुर्यादेकाहे द्वादशापि वा॥ १६१॥

मासि मासि श्राद्धं कर्तव्यमिति मुख्यपक्षः। अपर्याप्तावसम्भवे मासद्वयानन्तरं श्राद्धद्वयम्। तत्राप्यशक्तौ द्वादशभिर्दिनैर्द्वादशमासिकश्राद्धानि। तदसम्भवे एकस्मिन्नपि दिने द्वादशश्राद्धानीत्यर्थः। एवं मासिकापकर्षे तन्मध्यतदन्तकाल-कर्तव्यत्वेन त्रैपक्षिक-षान्मासिकद्वय-सपिण्डीकरणापकर्षः सिध्यति।

पूर्णे संवत्सरे श्राद्धं षोड़शं परिकीर्तितम्।
तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यते॥ १६२॥ (हेमाद्रिः)

### प्रभा

परदिने श्राद्धं न कर्तव्यं तत्र कृष्णैकादशी प्रतीक्षणीया। केचित्तु 'यावद्रक्तक्षरणं तावदशौच'मिति वदन्ति, तथा व्यवहरन्ति च। 'अपि चान्तरामृतसुतके' इति मृतसुतक पदोपादानात् तन्निमित्तके श्राद्धविघ्ने समुत्पन्ने शुचीभूतेन श्राद्धयोग्यप्रशस्तकालप्राप्त-तिथौ श्राद्धं कर्तव्यमिति सर्वमनवद्यम्।

इत्यत्र पूर्णे संवत्सरे क्रियमाणात् श्राद्धाद् यथोभयं निर्वहति तथाऽपकृष्ट-सपिण्डनादप्युभयनिर्वाहान्न पूर्णसंवत्सरे आब्दिकान्तरम्। गोभिले पूर्णे संवत्सरे सपिण्डीकरणमभिधाय 'अत ऊर्ध्वं संवत्सरे संवत्सरे प्रेतायान्नं दद्याद्'। 'यस्मिन्नहनि प्रेतः स्यादिति' सूत्रेण प्रथमाब्दादूर्ध्वं सांवत्सरिक-विधानाच्च। प्रथमाब्दे सांवत्सरिकं श्राद्धं नानुष्ठेयं केवलम्।

"आब्दिकं प्रथमं यस्य प्रकुर्वीत मलीम्लुचे।
त्रयोदशे तु संप्राप्ते कुर्वीत पुनराब्दिकम् ॥१६३॥

इति वचनात् त्रयोदशे मासि शुद्धे सांवत्सरिकं श्राद्धं कार्यमिति निष्कर्षः। प्रथमाब्दनियमाः —

प्रमृतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत्।
न दैवं नापि पित्र्यं स्याद् यावत् पूर्णो न वत्सरः ॥ १६४ ॥
पितर्युपरते चैव अशुद्धं तद् गृहं भवेत्।
नाश्नन्ति पितरो देवा यावत् पूर्णो न वत्सरः ॥ १६५ ॥
पित्रोरब्दमशौचं स्यात् षन्मासान् मातुरेव च।
मासत्रयं तु भार्यायास्तदर्धं भ्रातृपुत्रयोः ॥ १६६ ॥

## प्रभा

'तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यते' इति। पूर्णेऽब्दे सपिण्डने कृते तद्दिने पुनराब्दिककरणशङ्कायां तेनैवाब्दिकं तन्त्रसिद्धमिति हेमाद्रिधृतवाक्यस्याभिप्रायः। अतएव वचने "पूर्णे" इति विशेषणं सार्थकम्। नत्वपकर्षे इत्यर्थः। यत्तु गोभिलसूत्रे "अत ऊर्ध्वमित्युक्तं" तद्वार्षिकश्राद्धस्य प्रत्यब्दमवश्यकरणार्थमिति। कस्मिन्नहनीति। मृततिथेरपराह्णव्यापित्वं यस्मिन्नहनि तस्मिन्नहनि सपिण्डीकरण-स्योक्तत्वात्। तदनुरोधेन तद्दिने तत्पूर्वमासिकस्यापि अन्यतिथौ करणम्। सपिण्डीकरणश्राद्धस्य प्राप्तपितृलोकैः पितामहादिभिः सह प्रेतलोकपरिहारपूर्वक-पितृलोकप्राप्तिरूपसमानीकरणमात्रार्थकत्वस्योक्तत्वादपकर्षसपिण्डनस्थलेऽवश्यकर्तव्य-षोड़शश्राद्धात् प्रेतत्वविमुक्तिः समानीभावप्राप्तिश्च स्याताम्। तेनैव श्राद्धेनाब्दिक-श्राद्धस्यापि च तन्त्रतया सिद्धिरिति न कश्चिद्विरोधः। पूर्णसंवत्सरे प्राप्तमृततिथौ पुनः कार्यमेव प्रतिसाम्वत्सरिकं श्राद्धमिति निष्कर्षः।

पित्रोर्मृताविति शेषः।

कनिष्ठमातुः षन्मासान् मातापित्रोस्तु वत्सरम्।
अन्येषां प्रेतकार्याणि महागुरुनिपातने।
कुर्युः संवत्सरात्पूर्वं नैकोद्दिष्टं न पार्वणम् ॥ १६७ ॥

इति वचनात् संवत्सरमध्ये पितृव्यादीनामृतौ तेषां प्रेतकार्यमवश्यं कर्तव्यम्। न त्वाब्दिकं कृतसपिण्डीकरणेनापि।

पितर्युपरते पुत्रो मातुः श्राद्धान्निवर्तते।
मातर्यपि (च) मृतायां च पितुः श्राद्धादृते समाः ॥ १६८ ॥

अत्र सम्बन्धव्यवायाभावादनुषङ्गाधिकरणन्यायसम्भवात् 'ऋते समाः" इत्युभयत्रान्वयः। उभयोः सांवत्सरिकं कर्तव्यमित्यर्थः। अतएवास्मद्देशे निर्विशेषं मातृसांवत्सरिकमप्यनुतिष्ठतीति विप्रमिश्राः।

मातर्यपि मृतायां तु श्राद्धं कुर्याच्च पैतृकम्।
तस्या न वत्सरं कुर्यात् प्रेते पितरि च क्वचित् ॥ १६९ ॥

## प्रभा

अथ कालाशौचम्। पितुर्मातुश्च संवत्सरं यावत् कालाशोचम्। विमातुः षन्मासान्, भार्याया मासत्रयम्। भ्रातुः पुत्रस्य च सार्धैकमासं पक्षत्रयमिति यावत्। ननु "अन्यश्राद्धं परान्नं च गन्धं माल्यञ्च मैथुनम्। वर्जयेद्गुरुपाते च यावत् पूर्णो न वत्सरः" ॥ इति पितर्युपरते वर्षमध्ये मातरि मृतायां मातुःश्राद्धं कर्तव्यं न वेत्याशङ्क्याह—'पितर्युपरत' इति। द्वयोरपि मातापित्रोर्महागुरुत्वेन सम्बन्धव्यवायाभावात्—सम्बन्धव्यवधानाभावात् पितर्युपरते मातुः श्राद्धाद् ऋते समा अन्यश्राद्धान्निवर्तते, एवं मातर्युपरतायां पितुःश्राद्धादृते अन्यश्राद्धात् समा संवत्सरं यावन्निवर्तते। अतएवोक्तं "ऋते समाः" तत्रैकत्रान्वितपदस्यान्यत्रान्वयरूपानुषङ्गबलात् सिद्धः। 'ऋते इति' मातुः श्राद्धादृते इत्यत्राप्यन्वेति। अन्यथा पूर्वार्धवैयर्थ्यापत्तेः। समां इत्यपि कुत्रचित् पाठः। तेन समां संवत्सरं यावन्निवर्तते अन्यश्राद्धादिति शेषः। अन्यश्राद्धमपि प्राप्तपितृलोकश्राद्धपरम्। तेन प्रेतश्राद्धान्ननिवृत्तिः। "महागुरुनिपाते तु काम्यं किञ्चिन्न चाचरेत्। आर्त्विज्यं ब्रह्मचर्यं च श्राद्धं दैवयुतञ्च यत्" ॥ एतच्च देवपक्षयुतश्राद्धवर्जनममावास्यादिमृताहक्रियमाणसदैव-

एतद्वाक्यप्रामाण्ये मातृसाम्बत्सरिके विकल्पः।

"तथैव काम्यं यत्कर्म वत्सरात् प्रथमादृते ॥ १७० ॥

इति स्मृतेः सम्वत्सरमध्ये काम्येष्वनधिकारः, न नित्यनैमित्तिकेषु। सपिण्डीकरणोत्तरं सम्बत्सरमध्येऽपि काम्येष्वधिकारः।

सपिण्डीकरणादूर्ध्वं प्रेतः पार्वणभाग् भवेत्।
वृत्तपूर्तेष्टियोग्यश्च गृहस्थश्च ततो भवेत् ॥ १७१ ॥

वृत्तं प्रतिग्रहादि। पूर्तं वापिकूपतड़ागादि। इष्टिः यागादिः। केवलं वक्ष्यमाणानि न कार्याणि। (वृद्धमनुः)

दीपदानं गयाश्राद्धं श्राद्धञ्चापरपाक्षिकम्।
प्रथमेऽब्दे न कुर्वीत महागुरुनिपातने ॥ १७२ ॥

अपरपाक्षिकम् अमावस्याश्राद्धम्। एतत्तु अष्टकाऽन्वष्टका-युगाद्यादीनामुपलक्षणम्। पित्तर्युपरते इति—(यमः)

माङ्गल्यमुत्सवं चैव परपाके च भोजनम्।
प्रथमेऽब्दे न कुर्वीत योजनेऽपि कृते सति ॥१७३॥
मधु मांसं परान्नं च मैथुनं चान्यतर्पणम्।
प्रथमेऽब्दे न कुर्वीत सपिण्डीकरणे कृते ॥ १७४ ॥

**प्रभा**

श्राद्धेतरपरम्। केवलं तर्पणं वैश्वदेवे न त्याज्य तयोर्नित्यकृत्यान्तर्गतत्वात्, सन्ध्यादिनित्यक्रियाया निषेधाभावात्। ये तु मातुः श्राद्धादित्यत्रापि 'ऋते समा' इत्यन्वयमङ्गीकृत्य मातृश्राद्धं कुर्वन्ति, तन्मन्दम्, 'मातर्यपि च वृत्तायां श्राद्धं कुर्यात्त्, पैतृकम्। तस्या न वत्सरं कुर्यात् प्रेते च पितरि क्वचित्॥ इति वचनात्। तस्माज्जनकमरणाब्दे मातृवार्षिकमपि न कार्यम्। मातृमरणाब्दे तु पितृवार्षिकश्राद्धमात्रं कार्यमितीयानेव भेदः। अमावास्यादिनित्यश्राद्धानि उभयोरप्यब्दे न कार्यमिति-सिद्धान्तः। यत्तु अनुषङ्गाधिकरणन्यायादुभयोः संवत्सरे उभयोः सांवात्सरिकं कार्यमिति लिखितं तन्न विचारसहमिति गदाधरजनकः। तत्रानेकोद्देश्येन प्रवृत्तावन्यस्यापि सिद्धिरूपप्रसङ्गभिन्नानुषङ्गाभावात्। "प्रमितौ पितरौ यस्य देहस्तस्याशुचिर्भवेत्। नापि दैवं न वा पैत्रं यावत् पूर्णो न वत्सरः" ॥ इति देवीपुराणवचनमनुस्मृत्याह—'तथैव काम्यमि'त्यादि।

मैथुनमत्र विवाहः। गृहस्थश्च ततो भवेदिति वाक्यदर्शनात्। गृहस्थपदस्य संगृहीतदार एव मुख्यत्वात्। गृहस्थाश्रमविहितकर्मानुष्ठानयोग्यतापरत्वे लक्षणाप्रसङ्गात्। पुत्रेण विवाहोऽपि कर्तव्यः। कृतदारेण पुनर्दारान्तरस्वीकारो न कर्तव्यः। विवाहप्रतिषेधात्। सपिण्डीकरणे कृतेऽप्येतानि अब्दमध्ये न कुर्यादित्यर्थः।

## प्रभा

अनुषङ्गाधिकरणेषु असम्बद्धव्यवयाभावो नानुषङ्गनिमित्तं किन्तु आकाङ्क्षादिसद्भाव एव तन्निमित्तमिति विचारितम्। 'पितर्युपरते' इति वाक्ये आकाङ्क्षाविरहान्नानुषङ्गप्रसङ्गोऽपि अनेनैवास्वारस्येन 'मातर्यपि च' इति वाक्यस्य प्रामाण्ये मातृसांवत्सरिके विकल्प इति तैरुक्तम्। यच्चोक्तं विकल्प इति तत्रापि प्रष्टव्यम्। किं वाक्ययोर्विरोधाद् विकल्पः, अथवा स्मृत्याचारयोः? तत्र न प्रथमः, उभयोर्वाक्ययोरपि संवत्सरे मातृसांवत्सरिकानुष्ठानाभावस्य स्पष्टमभिहितत्वेन वाक्ययोर्विरोधाभावात्। न द्वितीयः, तथाचारस्य कृत्यकौमुद्यादिषु अलिखितत्वेनानादृतत्वात्। स्मृत्यपेक्षयाद्यन्तरितप्रामाण्येनाचारस्य दुर्बलत्वाच्च। अतएव पूर्वोक्तः सिद्धान्त एव श्रेयानित्यलमतिविस्तरेण।

'पितर्युपरते इति' सपिण्डीकरणे कृत इति। संम्वत्सरान्ते सपिण्डीकरणं मुख्यः, तत्र अपकर्षनिमित्तमाह-व्याघ्रः "आनन्त्यात् कुलधर्माणां पुंसां चैवायुषःक्षयात्। अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते"॥ अत्र द्वादशाहपदं द्वादशदिनपरम्, "द्वादशाहे वा कुर्यादेकाहे द्वादशाथवा" इत्यादिवचनदर्शनात्। अतएव चैकाहापेक्षया द्वादशाहः प्रशस्यत इत्युक्तम्। एतच्च प्रथममासिकमृततिथावारभ्य कर्तव्यम्। एतादृशसपिण्डीकरणमभिप्रेत्योक्तम्—'सपिण्डीकरणे कृत' इति। एतादृशे सपिण्डीकरणे सम्पन्ने न प्रेतत्वविमुक्तिः, पूर्णसंवत्सर एव प्रेतत्वस्य विमुक्तिः। "कृते सपिण्डीकरणे नरः संवत्सरात् परम्। प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते"॥ इति विष्णुधर्मोत्तरवचनात्। "यदहर्वा वृद्धिरापद्येत" इति गोभिलसूत्राद् यदि वृद्धिनिमित्तं सपिण्डीकरणं क्रियेत तदा तु तदनन्तरमेव प्रेतत्वविमुक्तिः। संवत्सरवृद्ध्यारम्भकालयोस्तुल्यत्वात्। ततश्च काम्यकर्मादावधिकारः सम्पाद्यते। "अर्वाक् संवत्सराद् द्वौ पूर्णे संवत्सरेऽपि वा। ये सपिण्डीकृताः प्रेता न तेषां तु पृथक् क्रिया"॥ इति शातातपवचनात्। स्फुटीभविष्यति चैतदुपरिष्टात्।

अथ सपिण्डीकरणविचारः ।

असपिण्डीकृतप्रेतः क्षुत्तृषा परिपीड़ितः ।
आर्तो दुःखान्यवाप्नोति यातना निरयेष्वपि ॥ १७५ ॥ इति ।
कृते सपिण्डीकरणे नरः सम्बत्सरात्परम् ।
प्रेतदेहं समुत्सृज्य भोगदेहं प्रपद्यते ॥ १७६ ॥

तथा— ततः पितृत्वमापन्नः सर्वभोगसमन्वितः ।
अग्निष्वात्तादिमध्यस्थः प्राप्नोत्यमृतमुत्तमम् ॥ १७७ ॥
नासपिण्ड्यग्निमान् पुत्रः पितृयज्ञं समाचरेत् ।
पापो भवत्यकुर्वन् हि पितृहा चोपजायते ॥ १७८ ॥
एकादशाहं निर्वर्त्य अर्वाग्दर्शाद् यथाविधि ।
प्रकुर्वीताग्निमान् पुत्रो मातापित्रोः सपिण्डनम् ॥ १७९ ॥

यद्यपि पितृयज्ञे मातुः प्रवेशो नास्ति तथापि वचनवशान्मातुरपि सपिण्डीकरणं कृत्वैव पिण्डपितृयज्ञकरणम् । सपत्नमात्रादेस्तु स्वकाल एव सपिण्डीकरणम् । दशाहमध्ये दर्शपाते तु न पिण्डपितृयज्ञानुष्ठानम् । तद् यथा—

दशाहाभ्यन्तरे यस्य सपिण्डीकरणं भवेत् ।
प्रेतत्वं सर्वदा तस्य यावदाभूतसंप्लवम् ॥ १८० ॥
सपिण्डीकरणं कुर्यात् पूर्ववदग्निमान् सुतः ।
परतो दशरात्राच्चेत् कुहुराब्दं परीतरः ॥ १८१ ॥
द्वादशैकादशे वाह्नि साग्निः कुर्यात् सपिण्डनम् ।
शावाशौचस्य मध्येऽपि कुर्यादेवाविशङ्कयन् ॥ १८२ ॥

द्वादशाहदिने दर्शपाते द्वादशाहेऽशौचेऽपि सपिण्डीकरणम् । अशोचानन्तरं

**प्रभा**

सपिण्डीकरणेऽपीति । यदहर्वा वृद्धिरापद्येतेति "अनाश्रमी न तिष्ठेत्तु क्षणमात्रमपि द्विजः" इत्यादिना च प्रथमविवाहार्थं सपिण्डीकरणं क्रियते तदैतानि न निषिद्धानि । एवञ्च प्रौढ़कन्याया दोषदृष्ट्या यथा महागुरोः सपिण्डनापकर्षस्तथाऽनाश्रमिणेऽपीति रघुनन्दनोक्तिः सुतरां सङ्गच्छते ।

"देये" इति विघ्नेऽप्यवश्यं कर्तव्ये । परिष्कृतं च उपरिष्टात् ।

दर्शपाते तु अशौचानन्तरदिने सपिण्डीकरणं, 'द्वेये पितृणां श्राद्धे तु' इत्यादि वक्ष्यमाणवचनात्। एकादशाहदिने दर्शपाते तु एकादशाह एव। एतत्पक्षद्वये,—

अर्वाक् सपिण्डीकरणात् प्रेतश्राद्धानि षोड़श। तथाच
श्राद्धानि षोड़शादत्त्वा नैव कुर्यात् सपिण्डनम् ॥ १८३ ॥

इति वचनाद् "द्वादशाहेऽथवा कुर्यादिति पक्षमनुरुध्य एकादशाहे एकादशाह-श्राद्धं समाप्य तत्रैव प्रथममासिकम्। द्वादशेऽह्नि त्रैपक्षिकं समाप्य द्वितीय-मासिकम्। त्रयोदश-चतुर्दश-पञ्चदशाहेषु तु तृतीय-चतुर्थ-पञ्चम-मासिकानि। षोड़शेऽह्नि ऊनषाण्मासिक-षष्ठमासिके। सप्तदशाष्टादशोनविंशविंशैकविंशाहेषु सप्तमाष्टम-नवम-दशमैकादशमासिकानि। द्वाविंशेऽह्नि ऊनसाम्बत्सरिक-द्वादशमासिके कृत्वा एतस्मिन्नेव दिने सपिण्डीकरणं कुर्यात्। यदा तु एतदब्दमध्येऽन्तिममासं त्यक्त्वा मध्येऽधिमासः पतति तदा तत्संख्यकदिनेऽधि-मासश्राद्धं कृत्वा ततःपरदिनेषु अपरमासिकश्राद्धानि कुर्यात्। एवं दिनवृद्ध्या त्रयोदशेऽह्नि ऊनसाम्बत्सरिकद्वादशमासिक-सपिण्डीकरणानि कुर्यात्। द्वादशे मासि अधिमासपाते तु द्वाविंशेऽह्नि अधिमासविहितश्राद्धोनसाम्बत्सरिक-द्वादश-मासिकसपिण्डीकरणश्राद्धानि कुर्यादिति निष्कर्षः। वृद्धिनिमित्ताभ्यु-दयिकश्राद्धार्थमप्येवमपकर्षः। द्वादशाहे तु वृद्धौ एकादशाहे सपिण्डीकरणम्। द्वादशाहोत्तरं त्रयोविंशाहात्पूर्वं वृद्धौ द्वादशाहे सपिण्डीकरणम्। त्रयोविंशाहात् प्रभृति त्रिपक्षात्पूर्वं वृद्धौ पूर्वोक्तरीत्या एकादशाहदिनमारभ्य द्वादशसु दिनेषु सपिण्डीकरणान्तानि श्राद्धानि कुर्यात्। त्रिपक्षादिकालात्परतो वृद्धौ त्रिपक्षादिकाले सपिण्डनम्। यत्र त्वतीतसपिण्डीकरणकालो वृद्धिनिश्चये उत्तरभाविसपिण्डीकरणकालात्पूर्वं वृद्धावुपस्थितायां "यदहर्वा वृद्धिरापद्येते"ति गोभिलोक्तापकर्षपक्षः सपिण्डीकरणस्य ततः "प्रागावर्तनादह्नः कालं विद्यादिति" गोभिलेन चूड़ादिवृद्धेर्यामद्वयान्तर्विधानात् सपिण्डीकरणस्यापराह्णे विधानात् तयोरवाधायासन्नपूर्वदिने सपिण्डीकरणम्। आवर्तनं पश्चिमदिग-वस्थितच्छायायाः पूर्वदिग्गमनारम्भकालः। एवं चोपरिवृद्धिं निश्चित्यापकृष्य-सपिण्डने कृते तदानीं विघ्नेन वृद्ध्यभावेऽपि वृद्ध्यारम्भकालान्तरं पूर्णसंवत्सरं वा प्राप्य पितृत्वप्रापकमिति, न पुनः सपिण्डनान्तरं—

सपिण्डीकरणं कुर्याद् यजमानस्त्वनग्निमान् ।
अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभः ॥ १८४ ॥

इति भविष्यपुराणेऽनाहिताग्निप्रेतस्यैव पूर्णेऽब्दे सपिण्डीकरणविधानात् । आहिताग्निप्रेतस्य सम्बत्सरमध्ये कुत्रचित्काल इत्यपेक्षायाम्—

प्रेतश्चेदाहिताग्निः स्यात् कर्तानग्निर्यदा भवेत् ।
सपिण्डीकरणं तस्य कुर्यात् पक्षे तृतीयके ॥ १८५ ॥

इति सुमन्तुवचनात् "त्रिपक्षोऽग्निमतः काल' इति पैठीनसिवचनाच्च तस्य त्रिपक्षे सपिण्डीकरणसमाचारो युक्ततरः । तत्राशौचपातेऽशौचान्तदिने सपिण्डीकरणं "देये पितणां श्राद्धे तु" इत्यादिवचनात् ।

एकादशे द्वादशेऽह्नि त्रिपक्षे वा त्रिमासि वा ।
षष्ठे चैकादशे चाब्दे सम्पूर्णे वा शुभागमे ॥
सपिण्डीकरणस्येत्थमष्टौ कालाः प्रकीर्तिताः ॥ १८६ ॥

"नवममास्येके" इति । उत्तरस्मिन् मासि वृद्धौ निश्चितायामेते सपिण्डीकरणेऽपकर्षकाला इति कल्पतरावुक्तम् । पिण्डपितृयज्ञ-वृद्ध्यौर्द्ययोरनुरोधेन सपिण्डीकरणापकर्षो नान्यथेति कल्पतरुकारः । विज्ञानेश्वरादिभिस्तु—एते नवकाला अपि स्वातन्त्र्येण सपिण्डीकरणस्यापकर्षका इत्युक्तम् । जीवत्पितृक आहिताग्निः पिण्डपितृयज्ञस्यानारम्भपक्षे मातुः सपिण्डनमनाहिताग्निपुत्रवत् पूर्णे संवत्सरे त्रिपक्षादौ वा कुर्यात्, पिण्डपितृयज्ञानुरोधाभावादिति ।

वृद्धिश्राद्धी गयां गच्छन् साग्निः सन्न्यासनात् पितुः ।
तथैव पुत्रिकापुत्रः सद्यः कुर्यात् सपिण्डनम् ॥ १८७ ॥

सद्य इत्यशौचानन्तरमित्यर्थः । गयां गच्छन् गयायात्रायामुपस्थितायां सपिण्डीकरणं कृत्वा यात्रां कुर्यात् । गयाश्राद्धं पुनः सम्वत्सरानन्तरं कार्यम् । दीपदानमित्यादिना निषेधात् । एतेन प्रथमाब्दे गयायात्रा कार्या, न तु गयाश्राद्धमित्यर्थः । पुत्रिकापुत्रो यथा—

अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् ।
यदपत्यं भवेदस्यां तन्मम स्यात् स्वधाकरम् ॥ १८८ ॥

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम् ।
अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति ॥ १८९ ॥
मातुः प्रथमतः पिण्डं निर्वपेत् पुत्रिकासुतः ।
द्वितीयं च पितुस्तस्यास्तृतीयं तु पितुः पितुः ॥ १९० ॥

पितुः पितुः प्रमातामहस्य । एवं च मातामहाय प्रमातामहायेत्यर्थः ।

आज्यं विना यथा तैलं सद्भिः प्रतिनिधीकृतम् ।
तथैकादशपुत्राः स्युः पुत्रिकौरसयोर्विना ॥ १९१ ॥
आनन्त्यात् कुलधर्माणां पुंसां चैवायुषःक्षयात् ।
अस्थितत्वाच्छरीरस्य द्वादशाहः प्रशस्यते ॥ १९२ ॥

देशविप्लव-गणितावधारितायुःसमाप्त्यादिविषयम्। शूद्राणां द्वादशेऽहनीति-विष्णुस्मरणात् । "मन्त्रवर्जं हि शूद्राणां द्वादशेऽह्नि-सपिण्डता" 'इति कर्ता तत्कालतः शुचि'रिति वचनात् द्वादशाहे सपिण्डीकरणं विहितम् । अत्राकरणे दोषाश्रवणात् केचिच्छिष्टाः शूद्राः पूर्णसम्वत्सरादौ कुर्वन्ति ।

सपिण्डीकरणश्राद्धमुक्तकाले न चेत् कृतम् ।
रौद्रे हस्ते च रोहिण्यां मित्रभे वा समाचरेत् ॥ १९३ ॥

यदि उक्तेषु कालेषु दैवात् प्रमादादशौचादिना वा सपिण्डीकरणं न कृतं तदा एतेषु नक्षत्रेषु कुर्यात् । अशौचपाते तु अशौचान्तदिने सपिण्डीकरणम्। 'देये पितॄणां श्राद्धे तु' इत्यादि वक्ष्यमाणवचनात् । यस्मिन् दिने मृततिथे-रपराह्णादिकालव्याप्तिस्तस्मिन्नेव दिने सपिण्डीकरणानुरोधादन्यतिथावपि मासिकश्राद्धकरणम् ॥

अपुत्रस्य सपिण्डीकरणविचारः ।

सपिण्डीकरणं नास्ति ह्यपुत्रस्य द्विजन्मनः ।
अशौचमुदकं पिण्डमेकोद्दिष्टं न पार्वणम् ॥ १९४ ॥
अपुत्रा वा मृता ये च पुरुषा वा स्त्रियोऽपि वा ।
तेषां सपिण्डनाभावादेकोद्दिष्टं न पार्वणम् ॥ १९५ ॥

इत्यादिवचनानि "प्रजाश्चोत्पादयितव्या" इत्यादिविध्यर्थवादतया वर्णनीयानि ।

तथाच— "सर्वाभावे स्वयं पत्न्यः स्वभर्तॄणाममन्त्रकम् ।
सपिण्डीकरणं कुर्युस्ततः पार्वणमेव च ॥ १९६ ॥
अपुत्रे प्रस्थिते कर्ता न भवेच्छ्राद्धकर्मणि ।
तत्र पत्न्योऽपि कुर्वीत सापिण्ड्यं पार्वणं तथा ॥ १९७ ॥

इत्यतो विवाहितस्य सपिण्डीकरणमवश्यमेव कर्तव्यं केवलमविवाहितस्य सपिण्डीकरणं न कर्तव्यम् । तथाच—

द्वादशाद् वत्सरादर्वाक् पौगण्डमरणे सति ।
सपिण्डीकरणं न स्यादेकोद्दिष्टादि कारयेत् ॥ १९८ ॥

इति । पौगण्डो वाल्यः । आदिपदेनैकादशाहादिविहितदानाद्युपसंग्रहः ।

असंक्रान्तेऽपि कर्तव्यमाब्दिकं प्रथमं द्विजैः ।
शुद्धमासमृतानां स्यान्मासेन प्रथमाब्दिकम् ॥ १९९ ॥

इति वचनाद् द्वादशमासा यदधिमासस्तदधिमासे सपिण्डीकरणम् । मध्ये मासान्तरेऽधिमासे विष्णूक्तवचनान्मासैकवृद्धिः । त्रयोदशे मासि सपिण्डनम् ।

पितुः सपिण्डीकरणं तस्य पित्रादिभिः सह ।
पुरुषाणां तु सर्वेषां तद्वत्कुर्यात्सपिण्डताम् ॥ २०० ॥

पित्रादिभिः पितृ-पितामह-प्रपितामहैः । पुरुषाणां पितृव्यादीनाम् । पुनस्तद्वद् यः कश्चिदधिकारी प्रेतस्य पित्रादिभिः सह कुर्यादित्यर्थः ।

असंस्कृतौ न संस्कार्यौ पूर्वौ पुत्र-प्रपुत्रकैः ।
पितरं तत्र संस्कुर्यादिति कात्यायनोऽब्रवीत् ॥ २०१ ॥
पापिष्ठमपि शुद्धेन शुद्धं पापकृतापि वा ।
पितामहेन पितरं कुर्यादिति विनिश्चयः ॥ २०२ ॥
( छान्दोग-परिशिष्टे कात्यायनः )

**प्रभा**

सर्वाभावइति । 'अपुत्रायां मृतायां तु पतिः कुर्यात् सपिण्डता'मिति पैठीनसिवचनैकवाक्यत्वात् "पतिपुत्रविहीनायाः स्त्रिया नास्ति सपिण्डता" इत्येकवाक्यतया चापुत्रायां छान्दोगपरिशिष्टे पञ्चदशश्राद्धविधानात् । पुरुषाणां तु "पुरुषस्य पुनस्त्वन्ये" इत्यनेन पुत्रवच्छिष्यान्तस्य सपिण्डने सामान्यतोऽधिकारप्रतिपादनादभ्युदयं विना पुरुषस्य सपिण्डनं प्रतीयते । "यानि पञ्चदशाद्यानि अपुत्रस्येतराण्यपि । एकस्यैव तु दातव्यमपुत्रायाश्च योषितः" ॥ इति छान्दोगपरिष्टीयं सपिण्डीकरणेतरपञ्चदशश्राद्धविधायकं तच्छिष्यपर्यन्ताभावे पुरुषस्य बोध्यम् ।

प्रेतभावापन्नमपि पितरं निस्तीर्णप्रेतभावेनानिस्तीर्णप्रेतभावेन वा पितामहेन शुद्धं कुर्यात्। सपिण्डयेदिति शास्त्रीयो विनिश्चयः। ततश्च शास्त्रबोधिते कानुपपत्तिः? यदा "संस्कुर्यादिति निश्चय" इति पाठस्तदायमर्थः।

यैरिष्टं विविधैर्यज्ञैः पूजितो यैश्च केशवः।
प्रेतलोकं न ते यान्ति तथा ये चाग्निहोत्रिणः॥ २०३॥

इति विष्णुधर्मोत्तरवचनादग्निहोत्रादेः प्रेतदेहप्राप्तिर्नास्ति। अतोऽसौ शुद्धस्तमपि पितामहेन शुद्धेनाशुद्धेन संस्कुर्यात् सपिण्डयेदित्यर्थः।

मातुः सपिण्डीकरणविचारः।

मातुः सपिण्डीकरणं कथं कार्यं भवेत् सुतैः।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं स्मृतम्॥ २०४॥

इति भर्तरि जीवति पितामह्यादिभिः सह भर्तरि मृते भर्त्रैव सह सपिण्डी-

**प्रभा**

ननु कथमसंस्कृतेन सह संस्कार इत्यत आह 'पापिष्ठमपी'ति। पापिष्ठमकृत-सपिण्डीकरणं शुद्धेन कृतसपिण्डीकरणेन पितामहेन पापकृता वा अकृतसपिण्डीकरणे-नापि शुद्धं कुर्यादिति शास्त्रनिश्चयः। अतो वचनबलान्नदोष इति तात्पर्यम्; किमपि वचनं न कुर्यात्; नास्ति वचनस्यातिभारः।

अथ मातुः सपिण्डीकरणविचारः। तथाच स्मृतिः—"पतिनैकेन कर्तव्यं सपिण्डी-करणं स्त्रियाः। एकत्वं हि गता यस्माच्चारुमन्त्राहुतिव्रतैः"॥ मृतपितृकेन पित्रादिभिः सह मातुः सपिण्डीकरणे श्वशुरार्यश्वशुरयोः पिण्डौ कुशैराच्छाद्यौ। तथा च गर्ग्यः— "पतिनैकेन कर्तव्यं सपिण्डीकरणं स्त्रियाः। सा गता हि मृतैकत्वं कुशैरन्तरयन् पितॄन्। श्वशुरस्याग्रतो यस्माच्छिरः प्रच्छादनक्रिया। पुत्रैर्दर्भेन सा कार्या मातुरभ्युदयार्थिभिः"॥ अन्तरयन्तीत्यर्थे अन्तरयन्निति लिङ्गव्यत्ययेन पुंस्त्वमिति हलायुधः। प्रव्रजिते पतिते पितरि मृतेऽपि न पितामहादिभिर्मातुः सपिण्डीकरणं किन्तु पितामह्यादिभिरेव। 'स्वेन भर्त्रा सहैवास्याः सपिण्डीकरणं स्त्रियाः। एकत्वं सा गता यस्माच्चारुमन्त्राहुतिव्रतैः। तस्मिन् सति सुताः कुर्युः पितामह्या सहैव तु'। इत्यत्र तस्मिन् सतीति श्राद्धानर्हभर्त्रुपलक्षणम्—अतएव तस्यान्वैव तु जीवन्त्यां तस्याः श्वश्र्वेति निश्चयः। इति लघुहारितेन श्वश्रूजीवने तस्याः श्वश्र्वेत्युक्तं तु न श्वशुरेणेति।

वाजपेयिभिस्तु—मृतं यानुगता नाथं सा तेन सह पिण्डताम्।
अर्हति स्वर्गवासस्तु यावदाभूतसंप्लवम्॥

इति यदन्वारोहेऽपि शातातपवाक्यं तत् फलश्रवात् कार्यमित्येतस्मान्नाद्रियते। ते च मातुः सपिण्डीकरणं सर्वथा श्वश्र्वादिभिः सह कुर्वन्ति। शिष्टाचारोऽपि तथैव।

करणमिति लघुहारीतोक्तः पक्षः कल्पतरुकारेण न लिखित इति नास्मद्देशे आद्रियते।

मृता यानुगता नाथं सा तेन सह पिण्डताम्।
अर्हति स्वर्गवासं च यावदाभूतसंप्लवम्॥ २०५॥

इत्यन्वारोहेण यत् पत्न्या सपिण्डीकरणमुक्तं तत् फलश्रवणात् काम्यम्।

अर्वाक् सपिण्डीकरणं यस्य सम्बत्सराद् भवेत्।
अस्याप्यन्नं सोदकुम्भं दद्यात् सम्बत्सरं द्विजः॥ २०६॥
अब्दमम्बुघटं दद्यादन्नं चामिषसंयुतम्।
सहपिण्डक्रियां कृत्वा वत्सरात् प्राक् स नित्यवत्॥ २०७॥

वृद्धिश्राद्धविचारः। "नान्विष्ट्वा तु पितॄन् श्राद्धे कर्मवैदिकमाचरेत्।" अत्र वैदिककर्मपदं विष्णुपुराणाद्युक्तकर्मपरम्। "पुरोडाशं चतुर्धा करोति" इत्यस्य "आग्नेयं चतुर्धा करोति" इत्येतेनोसंहारात्।

असकृद् यानि कर्माणि क्रियेरन् कर्मकारिणा।
प्रतिप्रयोगं नैव स्युर्मातरः श्राद्धकर्म च॥ २०८॥

असकृत् प्रतिदिनम् प्रतिमासं प्रतिवत्सरं च यानि कर्माणि क्रियन्ते। अस्मिन्नेव विषये विशेषमाह :—

**प्रभा**

अथ वृद्धिश्राद्धम्। तच्च नैमित्तिकं। 'नैमित्तिकमतो वक्ष्ये श्राद्धमभ्युदयात्मकमि'ति पुराणोक्तेः। वृद्धिरभ्युदयः। अभ्युदयश्च इष्टलाभः, स च भूतभविष्यद्भेदेन द्विविधस्तत्र भूतं पुत्रजन्मादि, भविष्यद् विवाहादि। अतएव वृद्धिश्राद्धमाभ्युदयिकश्राद्धञ्चेति नाम्ना व्यपदेशः। पितृपितामहप्रपितामहादीनामानन्ददायकत्वात् प्रसन्नमुखतारूपत्वाच्च नान्दीमुखं श्राद्धमपि। तथा च विष्णुपुराणे "कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः। नामकर्मणि बालानां चुड़ाकर्मादिकं तथा। सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने। नान्दीमुखं पितृगणं पूजयेत् प्रयतो गृही"। "नानिष्ट्वा तु पितॄन् श्राद्धैः कर्म वैदिकमाचरेदिति" शातातपवचने वैदिककर्मपदं प्रागुक्त कन्यापुत्रविवाहेष्वित्याद्यभ्युदयकर्मपरम्। "पुरोडाशं चतुर्धा करोति" आग्नेयं चतुर्धा करोतीत्युपसंहारवच्छन्दोगपरिशिष्टादिगणिताधानहोमाद्युत्कृष्यक्रियमाणजातकर्मादि परम्। तत्र तत्रापि प्रतिकर्म मातृपूजादिनान्दीमुखश्राद्धान्तकर्मणावृत्त्याचारः सुतरां संगच्छते। एतच्चोपरिष्टात् स्फुटीभविष्यति।

आधान-होमयोश्चैव वैश्वदेवे तथैव च ।
वलिकर्मणि दर्शे च पौर्णमासे तथैव च ॥ २०९ ॥
नवयज्ञे च यज्ञज्ञा वदन्त्येवं मनीषिणः ।
एकमेव भवेच्छ्राद्धमेतेषु न पृथक् पृथक् ॥ २१० ॥

इति वाक्योपात्तकर्मणां पुनः प्रयोगे न श्राद्धम् । सोमयागे तु पुनः पुनः प्रयोगेऽपि श्राद्धं भवत्येव । तथा

गणशः क्रियमाणे तु मातॄणां पूजनं सकृत् ।
सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ॥ २११ ॥

यानि कर्माणि विविवशेनार्थवशेन वा एकस्मिन्नेव दिने क्रियन्ते यथा आधानें होमश्च यद्वा उत्कृष्य (उदीच्य) क्रियमाणंसंस्कारकर्म, तत्र तत्र न्यायेन सकृदेव करणम् । प्राप्तमनूद्यते । वहिःप्रयोगगतत्वेन सर्वान् प्रति अविशिष्टत्वा-दिति । एवञ्च वृद्धिश्राद्धं यदर्थं कृतं तत्कर्म चेद् विघ्नात् तद्दिने न क्रियते तदा दिनान्तरेऽपि तत्कर्मणे ( तत्कर्मकरणे ) तदङ्गत्वेन पुनर्वृद्धिश्राद्धं-कर्तव्यम् ।

प्रधानस्याक्रिया यत्र साङ्गं तत्क्रियते पुनः ।
तदङ्गस्याक्रियायां तु नावृत्तिर्न च तत्क्रिया ॥ २१२ ॥

इति वचनेन साङ्गकरणाभिधानात् ।

स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मसु ।
पिण्डानोद्वहनात् तेषां तस्याभावेऽपि तत्क्रमात् ॥ २१३ ॥

"ओद्वहनात्" इत्यत्राङोऽभिविध्यर्थता । विवाहमभिव्याप्य सुतसंस्कार-कर्मसु इति वचनात् । पुत्रसंस्काररूपप्रथमविवाह एव पिता दद्यात् । द्वितीयादिविवाहे तु पुत्रः स्वयमेव दद्यात् ।

नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे बुध ।
अत ऊर्ध्वं सुतः कुर्यात् स्वयमेव तु नान्दिकम् ॥ १२४ ॥

स्वशब्दः सुत-मातामहादिव्यवच्छेदनार्थः । तस्य पितुरभावे तत्क्रमात् संस्कार्यपुत्रदुहित्रादिक्रमात् । संस्कार्यपित्रादिमातामहादिभ्यो दद्यादित्यर्थः ।

अतएव—भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा ।
सह पिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः ॥ २१५ ॥

इति वचनेन भ्रात्रादेः कन्याप्रदत्वे उपनयनकर्तृत्वे वा विवाहोपनयनाद्यर्थं संस्कार्यकन्यापुत्रादिपितृमातृसपिण्डीकरणं कृत्वा संस्कार्यपित्रादिभ्यः आभ्युदयिकं श्राद्धं दद्यादित्यर्थः। तस्मात् पितुरुपरमे संस्कार्यपित्रादिभ्यः आभ्युदयिकमिति सिद्धम्। अन्यपक्षास्तु हेयाः।

मातृश्राद्धं तु पूर्वं स्यात् पितॄणां तदनन्तरम् ।
ततो मातामहानां च वृद्धौ श्राद्धं त्रयं स्मृतम् ॥ २१६ ॥

वृद्धिः शुभकर्मादिः। (ब्राह्म-मात्स्ययोः—)

पितापितामहश्चैव तथैव प्रपितामहः ।
त्रयोऽप्यश्रुमुखाश्चैते पितरः परिकीर्तिताः ॥ २१७ ॥
तेभ्यः पूर्वतरा ये च प्रजावन्तः सुखोषिताः ।
ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते ॥ २१८ ॥

इत्यस्य वचनस्य पित्रादित्रये जीवति तदूर्ध्वं पुरुषत्रयमादाय वृद्धिश्राद्धपरत्वात् पित्रादित्रये जीवति उपरितनपुरुषत्रयमादाय वृद्धिश्राद्धं कुर्यात्।

यद्यपि प्रसन्नमुखतारूपनान्दीमुखत्वं प्रपितामहपित्रादीनां त्रयाणामेव तथाप्यन्येषां पित्रादित्रयाणामारोपान्नान्दीमुखता। माणवकस्याग्निवत्। 'स्वपितृभ्य' इत्यादिवचनात्तेषां श्राद्धदानम्। तेषु जीवत्सु उपरितनपुरूषाणां दानम्। वृद्धौ तु छान्दोगैर्मातृवर्गश्राद्धं न कर्तव्यम्।

## प्रभा

तेभ्यः पूर्वतरा इति। तेभ्यः पितृपितामहप्रपितामहेभ्यः, पूर्वतराः वृद्धप्रपितामहादित्रयः। पित्रादिषु त्रिषु जीवत्सु वृद्धप्रपितामहादित्रयाणाभाभ्युदयिकश्राद्ध कार्यमिति कल्पतरुकाराः। एवं मात्रादित्रये जीवति मातामहादित्रये जीवति चोपरितनपुरूषत्रयस्य श्राद्धम्। एवं च तत्र कस्यचिद्मरणे उपरितनपुरुषं प्रवेश्य श्राद्धं कार्यमिति गदाधरः। अश्रुमुखा आनन्दाश्रुमुखाः। "प्रसन्नमुखसंज्ञास्तु माङ्गलीया यतस्तु ते" इति मत्स्यपुराणवचनात्।

षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् ।
न योषिद्भ्यः पृथग् दद्यादवसानदिनादृते ।
स्वभर्तृपिण्डमात्रेभ्यस्तृप्तिरासां यतः स्मृता ॥ २१९ ॥

इति छन्दोगपरिशिष्टवचनाद् गोभिलेनानुक्तत्वाच्च । यथोक्तश्राद्धकरणाशक्तौ पिण्डदानमष्टब्राह्मणभोजनदानं हिरण्यदानं वा कार्यम् । पिण्डदानादेः साङ्गश्राद्धानुकल्पतया विहितत्वात् । एतत् करणपक्षे आभ्युदयिकश्राद्धाङ्गयोर्वसोर्धारायुर्वृद्धिकरमन्त्रजपयोर्नानुष्ठानम् ।

कुड्यलग्नां वसोर्धारां सप्तवारान् घृतेन तु ।
कारयेत् पञ्चवारान् वा नातिनीचां नचोच्छ्रिताम् ॥ २२० ॥

इति वसोर्धारामुक्त्वा—

आयुष्याणि च शुद्ध्यर्थं जप्त्वा तत्र समाहितः ।
षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् ॥ २२१ ॥

इत्यत्र 'च'कारेण क्त्वाप्रत्ययेन चैतयोः श्राद्धाङ्गत्वं सूचितम् ।

अथामावास्याश्राद्धविचारः । "अमावास्या तिस्रोऽष्टष्टकास्तिस्रोऽन्वष्टका माघोप्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदशो व्रीहियवपाकौ च ।" ।

एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः ।
श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते ॥ २२२ ॥
देवकार्याणि पूर्वाह्ने मनुष्याणां तु मध्यमे ।
पितृणामपराह्ने तु कार्यान्येतानि यत्नतः ॥ २२३ ॥

त्रिधा विभागः अमावास्यादौ, व्यासोक्तपञ्चधा विभागः प्रत्याब्दिकादौ ।

अतएव कात्यायनः—

पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते ।
वासरस्य तृतीयांशे नातिसंध्यासमीपतः ॥ २२४ ॥

श्रुतिश्च क्षीणे देवानामन्नमिति ।

अथ चन्द्रक्षयोपलक्षितस्य वासरतृतीयांशरूपापराह्णस्य श्राद्धकालत्वम् । "नातिसन्ध्यासमीपत" इत्यत्र चत्वारो मुहूर्ता वासरतृतीयांशस्य श्राद्धकालः ।

प्रभा

तथा च वृद्धप्रपितामहादित्रयाणां नान्दीमुखता च यथा अग्नितुल्यतेजःसम्पन्नत्वान्माणवकेऽग्नितुल्यताऽऽरोप्यते तथा वृद्धप्रपितामहादित्रयेषु पित्रादित्रयाणां नान्दीमुखताऽऽरोप्यते इत्युपमार्थः। यथोक्तश्राद्धकरणाशक्तौ यद् ब्राह्मणभोजनादिकं विहितं तत्र त्रिष्वप्येतेष्वित्युक्त रेकैकमेकैकस्य द्वौ द्वौ त्रीं स्त्रीन् वा वृद्धौ फलभूयस्त्वमित्याश्वलायनसूत्रे द्वौ द्वावित्याभ्युदयिकश्राद्धविषयमिति कल्पतरुव्याख्यानदर्शनात् "पार्वणे श्राद्धे काम्ये चाभ्युदयिके" इत्यभिधानाच्च। मात्रादित्रिकस्य पित्रादित्रिकस्य मातामहादित्रिकस्य प्रत्येकं भोजनद्वयमिति कृत्वा षट्कं वसुसत्यसञ्ज्ञकानां विश्वेदेवानां स्थाने भोजनद्वयमित्यष्टब्राह्मणभोजनानि देयानि। सम्भवे तूक्तविधिना करणं समीचीनम्। तच्छ्राद्धकालश्च प्रातः प्रथममुहूर्तादूर्ध्वं मुहूर्तचतुष्टयत्वम्, "प्रातर्वृद्धिनिमित्तक"मिति शातातपोक्तेः, "वृद्धौ यत् क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते। सर्वं प्रदक्षिणं कार्यं पूर्वाह्णे तूपवीतिना॥" इति भविष्यपुराणवचनाच्च। आश्वलायनगृह्ये 'यवोऽसीति'मन्त्रे तु पुष्ट्या इति श्रुतेर्मन्त्रमात्रे स्वधापदस्थाने पुष्टिपदप्रयोगः कर्तव्यः। "स्वधयेति पदस्थाने पुत्या शब्दं वदेदिह। पितृनितिपदात्पूर्वं वदेन्नान्दीमुखानिति"। इति बह्वृचकारिकावचनात्। यथोक्तश्राद्धकरणे गौर्यादयो मातरः पूज्याः। तथाच छन्दोगपरिशिष्टे कात्यायनः—"कर्मादिषु तु सर्वेषु मातरःसगणाधिपाः। पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः॥ प्रतिमासु च शुद्धासु लिखिता वा पटादिषु। अपि वाक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः॥ कुड्यलग्नां वसोर्धारां सप्तवारान् घृतेन तु। कारयेत् पञ्चवारान् वा नातिनीचां नचोच्छ्रिताम्॥ आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः। षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत्॥ मातरश्च गौर्यादयः। तदुक्तं बह्वृचपरिशिष्टे—"गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमातरः॥ शान्तिः (धृतिः) पुष्टिर्धृतिः (तथा) स्तुष्टिरात्मदेवतया सह। आदौ विनायकः पूज्य अन्ते च कुलदेवता॥" ताश्च भविष्ये—'पूज्याश्चित्रेऽथवा कार्या वरदाभयपाणयः'। मातर इति सर्वासां 'विशेषणमतएव 'एतत्पाद्यं गौर्यै मात्रे नम' इति प्रयोगः। एता मातरो लोकमातरो ज्ञेयाः। 'अकृत्वा मातृयागन्तु यः श्राद्धं कुरुते नरः। तस्य क्रोधसमाविष्टा हिंसां कुर्वन्ति मातरः'॥ इति बह्वृच-परिशिष्टाद् दोषश्रुतेर्मातृयागस्य नित्यताऽवगम्यते। "शाल्यन्नं दधिसंयुक्तं वदराणि यवांस्तथा। मिश्रीकृत्य च चत्वारि पिण्डान् श्रीफलसन्निभान्"। इति ब्रह्माण्डपुराणवचनात् 'कृत्वा नान्दीमुखं श्राद्धं दधिमध्वाद्यद्रव्यकमिति गोभिलभाष्यकृतयशोधरलिखितवचनाच्च मधुनो न निवृत्तिः। अतएव 'मधुन आमिषत्वान्न देयमिति मिश्रमतमनुपादेयम्। विशेषपरिपाटी च तत् तत् पद्धतिमवलम्ब्य समाचरणीयेति संक्षेपः।

पञ्चमस्तु "अतिसन्ध्यासमीपत्वात् त्याज्य इति नारायणभाष्यम्। पिण्डान्वाहार्यकमिति—"ततः प्रभृति पितरः पिण्डसंज्ञां तु लेभिरे॥ इति—मत्स्यवचनात्।

पिण्डानां पितृणामन्वाहार्य्यं मासिकतृप्तिजनकम्। "अन्वाहार्यं तु मासिके" इत्यमरः। क्षयमाह—

अष्टमेऽंशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः।
अमावास्याष्टमांशे च ततः किल भवेदणुः॥ २२५॥

क्षयोऽत्र चतुर्थभागोनकलाविशिष्टता वक्ष्यमाणवचनात्। अत्र कलाया अवयवनाशोत्पत्तिरेव क्षयः। सा च सूक्ष्मतायां विनाशेऽप्यस्तीति-श्राद्धविवेकः।

अग्रहायण्यमावास्या तथा ज्यैष्ठस्य या भवेत्।
विशेषमाभ्यां व्रूवते चन्द्रचारविदो जनाः॥ २२६॥

अत्रेन्दुराद्ये प्रहरेऽवतिष्ठते
चतुर्थभागोनकलावशिष्टः।
तदन्त एव क्षयमेति कृत्स्न-
मेवं ज्योतिश्चक्रविदो वदन्ति॥ २२७॥

आभ्यामिति ल्यव्लोपे पञ्चमी। इमे प्राप्येत्यर्थः। चैत्रशुक्लप्रतिपदादि-मासाभिप्रायेणाग्रहायण्यमावास्या च ग्राह्या। वहुग्रन्थकारलिखनात्। चतुर्थभागोना या कला तया अवशिष्टः कालो भागत्रयावशिष्टः। मासान्तरे चतुर्दश्यष्टमयामे क्षयः। एतयोरमावास्या प्रथमयाम इति विशेषः। तदन्त एवामावास्यान्त एव कृत्स्नं क्षयमेति। मलयुक्ताब्देऽनयोरप्यमावास्ययोरन्य-मासवत् चतुर्दश्यन्तयामाद्यमावास्यासप्तमयामान्तं क्षयः। "यस्मिन्नब्दे द्वादशैकश्च यव्यस्तस्मिन् तृतीया परिदृश्या नोपजायत इति। यव्यो मासः। तृतीयया चतुर्थभागोनकलया-परिदृश्यश्चन्द्रो न भवति। मलमासयुक्ताब्दस्तु एकस्मान्मलमासादब्दद्वयानन्तरात्मकः। तृतीयाब्दे मलमासस्यावश्यम्भावादिति।

यदा चतुर्दशीयामं तुरीयमनुपूरयेत् ।
अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते ॥ २२८ ॥

चतुर्दशीयामं चतुर्दशीसम्बन्धिदिनयामम् । अधिकेन व्यपदेशा भवन्तीति-न्यायात् । पूर्वदिवसीय चतुर्दश्यपेक्षया परदिने अमावास्या क्षीयमाणा न्यूनकाल-व्यापिनी न तु पूर्वापरदिवसीययावच्चतुर्द्दश्यपेक्षया अनुपस्थितेः, तदा परदिने श्राद्धकालक्षयस्य सत्त्वेऽपि असत्त्वे च पूर्वदिन एव श्राद्धम् । एतद्विशेषवचना-दित्यर्थः ।

वर्धमानाममावास्यां लक्षयेदपरेऽहनि ।
यामांस्त्रीनधिकान् वापि पितृयज्ञस्ततो भवेत् ॥
प्रतिपद्यपि कुर्वीत श्राद्धं श्राद्धविदो विदुः ॥ २२९ ॥

प्रतिपद्यमावास्याष्टमांश इत्यर्थः । यामांस्त्रीनिति पूर्वदिवसीययामत्रयन्यून-चतुर्दश्यपेक्षया चन्द्रक्षयाभावेऽपि उत्तरदिने श्राद्धमित्यर्थः ।

यत्तु प्रत्यक्षश्रुतिविरोधादयं पक्षो नाद्रियत इति केचिद्वदन्ति । तन्न युक्तं, विरोधाधिकरणविषयत्वादस्य, श्रुतिस्तु अन्यत्र सावकाशा, वर्धमाना स्मृतिस्तु निरवकाशा इति न तस्या अप्रामाण्यम् । यदा दिनद्वये अमावास्याक्षया-लाभस्तदा पूर्वदिने चतुर्दश्यां सम्पूर्णायामपि श्राद्धं चन्द्रक्षयविशिष्टकाल-लाभात् । 'अमावास्यां प्रतीक्षेत तदन्ते वापि निर्वपेदि"ति वचनात् । तदन्ते चतुर्दश्यन्ते । यदा तु चन्द्रक्षयविशिष्टा चतुर्दशी पूर्वदिने श्राद्धकाले न लभ्यते । अपरदिनेऽपि चन्द्रक्षयविशिष्टा अमावास्या श्राद्धकाले नास्ति तदा केवला-मावास्यायामेव श्राद्धम् ; 'क्षीणे राजनि शस्यत' इति क्षयस्य प्राशस्त्यात्, तदलाभेऽप्रशस्तामावास्यातिथिमात्रं प्रतिनिधित्वेन ग्राह्यम् । पार्वणश्राद्धादौ पितामहे जीवति—

पित्ता यस्य तु वृत्तः स्याज्जीवेद् वापि पितामहः ।
पितुः स्वनाम संकीर्त्य कीर्तयेत् प्रपितामहम् ॥ २३० ॥

इति च वचनात् "त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्तते" इति वचनाच्च वृद्धप्रपितामहमादाय श्राद्धम् । एवं पितृपितामहयोर्मृतयोः प्रपितामहे च जीवति त्रिपुरुषनियमात् प्रपितामहपदं वृद्धप्रपितामहोपलक्षणम् । एवं च

"पितरो यत्र पूज्यन्ते तत्र मातामहा अपी"ति त्रिपुरुषनियमात् तत्राप्येवं व्यवस्था। केवलं मातामहे जीवत्यपि प्रमातामहादित्रयमुद्दिश्य श्राद्धम् स्वपितुः पितृकृत्येषु अधिकारो न विद्यत इति वचनात्। न जीवन्तमतिदद्यादित्यस्य-जीवत्पितृकमात्रविषयत्वात्। एवं च

पिण्डनिर्वापरहितं यत्र श्राद्धं विधीयते।
स्वधावाचनलोपोऽस्ति विकिरश्चैव युज्यते ॥ २३१ ॥

प्रभा

ननु प्रतिपद्यपिकुर्वीत श्राद्धमिति "तदेतदेष वै सोमो राजा यच्चन्द्रमाः स एतां रात्रिं क्षीयते, तत्क्षीणे देवानामन्नं पितृभ्यो ददाति" इति प्रत्यक्षश्रुतिविरोधाद् विरोधाधिकरणन्यायेन स्मृतेर्दुर्बलत्वं तथाच वर्धमानस्मृतिरनादरणीयेति चेन्न, तथाहि औदुम्बरी सर्वा वेष्टितव्या इति स्मृतिः, औदुम्बरीं स्पृष्ट्वोद्गायेतेति श्रुतिः तत्र सर्ववेष्टने सति श्रुत्युक्तस्पर्शनस्यासम्भवात् श्रुतिस्मृत्योर्विरोधे श्रुतेर्बलवत्त्वम्। अत्रतु "तदेतदेष वै" इति श्रुतिरमावास्यां श्राद्धं कार्यमिति प्रतिपादयति नत्वमावास्यायां क्षीणादिभेदेन कदा श्राद्धमिति प्रतिपादयति, नवा पारिभाषिक-क्षीणादित्वं व्यवस्थापयति तस्माद् भिन्नविषयत्वान्नानयोर्विरोधः प्रबलदुर्बल-भावचिन्तावेतिदिक्।

वृत्तो मृत इत्यर्थः।

अमावास्याश्राद्धकालाश्च सायाह्नमुहूर्तद्वय-पर्युदस्तेतरकाल-कुतपादिमुहूर्तपञ्चक-रौहिण्यादिमुहूर्तचतुष्टय-वासरतृतीयांशोयापराह्णमुहूर्तद्वयकाला यथाक्रममापत्-सामान्य-प्रशस्त-प्रशस्ततर-प्रशस्ततमत्वेन ज्ञेयाः। "पूर्वाह्णो वै देवानां मध्यंदिनं मनुष्याणाम् अपराह्णः पितृणाम्" इति श्रुतेस्त्रिधाविभक्तदिवसस्य तृतीयांशे श्राद्धम्। तत्र पञ्चधाविभक्तदिवसस्य सायाह्नमुहूर्तत्रये राक्षसी वेलात्वेन सर्वकर्मसु-गर्हितत्वात् तद्वर्जने यदवशिष्टमुहूर्तद्वयं लब्धं तदेव श्राद्धस्य प्रशस्ततमकालः। मुख्यकालत्वात्। उभयदिने वासरतृतीयांशे दर्शालाभे श्राद्धलोपापत्ते गौण-कालेऽपि श्राद्धं कार्यं। तथाच मण्डनाचार्याः मुख्यकाले—'यदावश्यं कर्म कर्त्तुं न शक्यते। गौणकालेऽपि तत्कार्यं गौणोऽप्येतादृशो मतः'॥ एतादृशो मुख्यसदृश इत्यर्थः। तेन यत्र दिनद्वयापराह्णव्याप्तौ "दर्शञ्च पौर्णमासञ्च पितुः साम्वत्सरं दिनम्। पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते"॥ इति

अक्षय्यदक्षिणास्वस्ति सौमनस्यां तथापि च ।
किञ्चिद् दद्यादशक्तस्तु उदकुम्भादिकं द्विजे ॥ २३२ ॥
तृणानि वा गवे दद्यात् पिण्डान् वाप्यथ निर्वपेत् ।
तिलदर्भैः पितॄन् वापि तर्पयेत् स्नानपूर्वकम् ॥ २३३ ॥
पिण्डमात्रं तु दातव्यमभावे द्रव्य-विप्रयोः ।
श्राद्धाहनि तु संप्राप्ते भवेन्निरशनोऽपि वा ॥ २३४ ॥
पराधीनः प्रवासी च निर्धनो वापि मानवः ।
मनसा भावशुद्धेन श्राद्धे दद्यात्तिलोदकम् ॥ २३५ ॥

इति वचनात् पार्वणश्राद्धाशक्तौ एतानि कुर्यात् ।

पितृश्राद्धे रवौ शुक्रे सप्तम्यां निशि-सन्ध्ययोः ।
संक्रान्त्यां जन्मदिवसे न कुर्यात् तिलतर्पणम् ॥ २३६ ॥

## प्रभा

शिवरहस्यब्रह्मवैवर्तपुराणादिवचनात् पूर्वेद्युः श्राद्धं विहित; तत्र केनचिन्निमित्तेन पूर्वेद्युरकरणे परेद्युरनुष्ठेयमिति तु सामवेदिपरम् । वासरस्य तृतीयांशे नातिसन्ध्या समीपतः इतिवचनादतिशब्दस्वरसात् सायाह्न मुहूर्तद्वयं यदनुगृहीतं तच्चापत्कल्पम् । सन्ध्यासमीपमुहूर्त आपद्यपि वर्जनीय इति भावः । 'रात्रौश्राद्धं न कुर्वीत राक्षसी कीर्तिता हि सा । सन्ध्ययोरुभयोश्चैव सूर्येचैवाचिरोदिते' ॥ इति मनुवचनात् 'सायाह्नस्त्रिमुहूर्तः स्याच्छ्राद्धं तत्र न कारयेत्" इति मत्स्यपुराणवचनाच्चैतेषां पर्युदस्तकालत्वं निर्णीतम् । तत्राप्यतिशब्दस्वरसान्मुहूर्तद्वयमनुज्ञातं । तेनैतान्-कालान्विहायाष्टममुहूर्ताच्चतुर्दशमुहूर्तपर्यन्तं पर्युदस्तेतरकाल एव सामान्यकालाः 'ऊर्ध्वं मुहूर्तात् कुतपात् यन्मुहूर्तचतुष्टयम् । मुहूर्तपञ्चकं वापि स्वधाभवन-मिष्यते' ॥ इति मत्स्यपुराणवचने मुहूर्तचतुष्टयं मुहूर्तपञ्चकं वेत्युक्तम् तत्र "अष्टमे भास्करो यन्मान्मन्दी भवति सर्वदा । तस्मादनन्तफलदस्तत्रारम्भो विशिष्यते" ॥ इति मत्स्यपुराणवचनात् कुतपादिमुहूर्तपञ्चकस्य प्रशस्तत्व । "पार्वणस्य मुहूर्तास्तु पञ्च ये परिकीर्तिताः । तेषांपरेहष्टमाच्छस्ता अष्टस्तदसम्भवे' ॥ इति वचनेऽष्टमेऽसम्भवस्थले विधानात् अष्टमात् परं नवममुहूर्ते शस्तेत्यभिधानाद रौहिण्यादिमुहूर्तचतुष्टयस्य प्रशस्ततरत्वमित्यवधेयम् ।

अयणे विषुवे चैव ग्रहणे चन्द्रसूर्ययोः ।
उपाकर्मणि चोत्सर्गे युगादौ पितृवासरे
रविशुक्रदिने वापि न दुष्येत् तिलतर्पणम् ॥ २३७ ॥

तीर्थे तिथिविशेषे च गङ्गायां प्रेतपक्षके ।
निषिद्धेऽपि दिने कुर्य्यात् तर्पणं तिलमिश्रितम् ॥ २३८ ॥

तिथिमात्रेऽपि कर्तव्यं तर्पणं सतिलोदकम् ।
निषिद्धदिनमासाद्य यः कुर्य्यात् तिलतर्पणम् ।
रुधिरं तद्भवेत् तोयं दाता च नरकं व्रजेत् ॥ २३९ ॥

अत्र पितृश्राद्धनिषेधः युगाद्ययणविषुवमृताहप्रेतपक्षव्यतिरिक्तविषयः । रविशुक्रदिने निषेधः सर्वापवादव्यतिरिक्तविषयः । जन्मदिवसनिषेधः-गङ्गाप्रेतपक्षव्यतिरिक्तविषय इति विवेकः । अत्र युगाद्ययणविषुवमृताह प्रेतपक्षव्यतिरिक्तपितृश्राद्धे तिलतर्पणनिषेधात् । अमावास्याष्टकान्वष्टका-काम्य-श्राद्धेषु तिलतर्पणं न कार्यं केवलं श्राद्धानुबन्धतिलतर्पणम् । तथा—

दर्शे स्नात्वा पितृभ्यश्च दद्यात् कृष्णतिलोदकम् ।
अन्नं च विधिवद् दद्यात् सन्ततिस्तेन वर्धते ॥ २४० ॥

इति वचनात् सन्ततिवृद्धिकामः अमावास्यां समुदितानि स्नान-तिलतर्पण-श्राद्धानि कुर्य्यात् ।

अमावास्यायां न गच्छेत् प्राप्तकालामपि स्त्रियम् ।
तैलं च न स्पृशेदामवृक्षादींश्छेदयेन्न तु ॥ २४१ ॥
सूर्यरुक्षगते चन्द्रे परान्नं योहि भक्षयेत् ।
तस्य मासकृतो होमो यस्यान्नं तस्य तद्भवेत् ॥ २४२ ॥

## प्रभा

दर्शश्राद्धस्यावश्यकर्तव्यतां दर्शयति । लघुहारीतः—"अमावास्यादिनियतं प्रोषिते धर्मचारिणो । पत्नौ तु कारयेन्नित्यमन्येनापृत्विगादिना । इति दर्शश्राद्धसमाचारः ।

सायं सन्ध्यां परान्नं च रात्रौ भोजनमैथुने ।
तैलं मांसं तिलपिष्ठममावास्यां विवर्जयेत् ॥ २४३ ॥

वनस्पतिगते सोमे परान्नं ये तु भुञ्जते ।
तेषां मासकृतो होमो दातारमनुगच्छति ॥ २४४ ॥

एतद्दोषवचनसामर्थ्यादभिमत एव निषेध इति विद्याकरवाजपेयिनः ।

गुर्वन्नं मातुलान्नं च श्वशुरान्नं तथैव च ।
पितुः पुत्रस्य यच्चान्नं न परान्नमिति स्मृतम् ॥ २४५॥

श्वशुरान्नं तु यो भुङ्क्ते स भुङ्क्ते पृथिवीमलम् ॥ २४६॥

एतत्तु गर्हितश्वशुरधनोपजीवनपरम् ।

छिनत्ति विरुधो यस्तु विरुत्संस्थे निशाकरे ।
पत्रं वा पातयत्येकं ब्रह्महत्यां स विन्दति ॥ २४७ ॥

"न पर्वणि तृणमपि छिन्द्यादि"ति यत् तद्विहितनिषेधायोगात् पूजार्थं गुरुशुश्रूषार्थं वा यत् पत्रछेदनं तद्व्यतिरिक्तपरम्। समिदादिछेदनं तु अन्यत्र सम्भवात् तत्र निषिद्धमेव। देवपूजापत्रपुष्पयोस्तु पर्युषितनिषेधात् प्रतिदिनमाहरणम्। अत्र

कुशं पत्रं च पुष्पं च गवामर्थे तृणानि च ।
इन्दुलोपे न दूष्यन्ति छेदने समिधस्तथा ॥ २४८ ॥

इति यद् वाक्यं दृश्यते तत्प्रामाण्ये तत्राप्यदोषः ।

अप्सु तस्मिन्नहोरात्रे पूर्वं गच्छति चन्द्रमाः ।
ततो विरुत्सु वसति यः प्रयात्यर्कं ततः क्रमात् ॥ २४९ ॥

इति विष्णुपुराणवचनादमावास्या मध्य एवायं दोषो नाद्यन्तयोरिति केचित्। अयमपि निषेधः पुरुषार्थ एव।

"दर्शे स्नानं न कुर्वीत मातापित्रोस्तु जीवतोः।" ॥ २५० ॥

वस्तुतस्तु अमावास्यातिथिमात्रेऽयं दोषः। "निषेधोऽमावास्यायामिति-कल्पतरुकृद्व्याख्यानादमावास्यातिथौ चन्द्रप्रवेशश्रवणाच्च। तथाच श्रुतिः—

"य एतां रात्रिमेतया षोड़श्या कलया सर्वमिदं प्राणभृजनुप्रविश्य ततः प्रातर्जायते, तस्माद्तां रात्रिं प्राणभृतः प्राणान्नविच्छिन्द्यादपि कृकलासस्येति।

वैश्वदेवविचारः। समग्रं श्राद्धमुक्त्वा—

ततो गृहवलिं कुर्यादिति धर्मो व्यवस्थितः।
ततस्तु वैश्वदेवाख्यं कुर्यान्नित्यक्रियां बुधः॥ २५१॥ इति
पितृश्राद्धमकृत्वा तु वैश्वदेवं करोति यः।
अकृतं तद्भवद्वेक्छ्राद्धं पितृणां नोपतिष्ठते॥ २५२॥
(वृद्धगौतमः)
प्रतिवातसरिको होमः श्राद्धादौ क्रियते यदि।
देवा हव्यं न गृह्णन्ति कव्यानि पितरस्तथा॥ २५३॥
(षट्त्रिंशन्मतकारिका)

इति पितॄन् सन्तर्प्य इति वचनात् पार्वणश्राद्धोत्तरत्वं वैश्वदेवं कर्तव्यम्।

यत्तु— 'सम्प्राप्ते पार्वणश्राद्धे एकोद्दिष्टे तथैव च।
अग्रतो वैश्वदेवः स्यात् पश्चादेकादशेऽहनि॥ २५४॥

इति परिशिष्टवचनं तच्छान्दोगविषयम्। केवलं—

पित्रोः श्राद्धे सम प्राप्ते नवे पर्युषितेऽपि वा।
पितृपूर्वं सुतः कुर्यादन्यत्रासत्तियोगतः॥२५५॥ (कार्ष्णाजिनिः)

## प्रभा

दर्शे स्नानमिति। अत्र च स्मृतिः—'अमास्नानं गयाश्राद्धं दक्षिणामुखभोजनम्। न जीवत् पितृकः कुर्यात् कृते च पितृहा भवेत्'। अमावास्यातिथिमात्र इति। "निमित्तं कालमादाय वृत्तिर्विधिनिषेधयोः। विधिः पूज्यतिथौ तत्र निषेधः कालमात्रके॥ तिथीनां पूज्यातानाम् कर्मानुष्ठानतो मता। निषेधस्तुनिवृत्तान्मा कालमात्रमपेक्षते"॥ इति माधवाचार्य्यधृतवृद्धगार्ग्यवचनात् अमावासामात्रे निषेधः। एवैनैकादश्यामुपवसेदिति विधौ प्रातर्दण्डमात्रा। स्मिकायामपि सम्पूर्णं दिवसे उपवासेन नैकादशी तिथिकालावच्छिन्ने। अष्टम्यां नारिकेलं नाश्नियादिति तु यावदष्टमी तावत्कालं नारिकेलभक्षण निषेधः।

वैश्वदेवमाह दक्षः—पञ्चमे च तथा भाग इति। अष्टधाविभक्तदिनस्य संविभागः "भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत्"॥ इतिहासपुराणाद्यैः षष्ठ-

इतिवचनात्—"पित्रोस्तु पितृपूर्वत्वं सर्वत्र श्राद्धकर्मणि ॥ २५६ ॥

इति कालादर्शप्रामाण्याच्च मातृश्राद्धात् पार्वणात्मकादपि पूर्वं नित्यश्राद्धम् ।

पार्वणं त्वाभिनिर्वर्त्य एकोद्दिष्टं समाचरेत् ॥ २५७ ॥ (जावालिः)

इति वचनात् सर्वैकोद्दिष्टानां च नित्यश्राद्धानन्तरं करणम् । नित्यश्राद्धस्यापि पार्वणत्वात् । अतश्च "कृत्वा तु पितृयज्ञान्तं वैश्वदेवं ततो वहि"रित्यनेन वलिक्रमिकं वैश्वदेववलिकर्मनित्यश्राद्धादि कृत्वैव मातृश्राद्धमिति ।

पञ्चमे च तथाभागे संविभागो यथार्हतः ।

देवपितृमनुष्याणां कीटानां चोपदिश्यते ॥ २५८ ॥ इसि

संविभागं ततः कृत्वा गृहस्थः शेषभुग्भवेत् ॥ ·५६ ॥ (दक्षः)

संविभागो विभज्यान्नस्य प्रतिपादनं । यथार्हतो यथायोग्यम् । भोजनं पञ्चमभाग एवेत्यर्थः ।

## प्रभा

सप्तमकौनयेदिति तेनैवप्रतिपादनात् । स्वाध्यायेनार्च्चयेतर्षीन् होमैर्देवान् यथाविधि । पितृन् श्राद्धैश्च नृनन्नैर्भूतानि वलिकर्मणा ॥ कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ॥ (३।८१) "पञ्चैतान् यो महायज्ञान् न स्थापयति शक्तितः" इत्यादि मनुवचनादस्य वैश्वदेवादिकर्मणोऽवश्यकर्तव्यत्वेन नित्यत्वम् ।

पञ्चसूनेति । पशुवधस्थानं सूना । सूना इव सूना हिंसास्थानगुणयोगात् चुल्यादयः, पञ्च गृहस्थस्य जीवादिहिंसास्थानानि । चूल्ली उद्वाहनी । पेषणी दृषदुपलात्मिका । उपस्करो गृहोपकरणकुण्डसम्मार्जन्यादिः । कण्डनी उलुखलमुषले । उदकुम्भो जलाधारकलसः । याः स्वकार्ये योजयन् पापेन सम्बध्यते । तासामिति । तासां चूल्ल्यादिसूनानां यथाक्रमं निष्कृत्यर्थमुत्पन्नपापनाशार्थं गृहस्थानां पञ्चमहायज्ञाः प्रतिदिनं मन्वादिभिरवश्यानुष्ठेयतया स्मृताः । एवञ्च निष्कृत्यर्थमित्यभिधानात् हिंसास्थानत्वेन कीर्तनात् सूनादोषैर्न लिप्यते इत्यादिभिः पापहेतुत्वं तत्क्षयार्थं च पञ्चयज्ञानां क्रमनुष्ठानं पुनः प्रत्यहमित्याद्यभिधानाच्च सन्ध्यावन्दनादिवदस्य नित्यत्वमपि प्रतीयते ।

अस्य च देवपूजानन्तरं कर्तव्यत्वमाहनृसिंहपुराणम्—"पौरुषेण च सूक्तेन तत्र विष्णुं समर्च्चयेत् । वैश्वदेवं ततः कुर्यात् वलिकर्म ततः परम् ॥ इति "। पितृश्राद्धमकृत्वा तु वैश्वदेवं करोति यः ॥ इत्यादिवचनात् तर्पनादिपितृकृत्यसम्पादनात्परं वलिवैश्वदेवं कर्म कर्तव्यम् ।

पञ्चसूना गृहस्थस्य चुल्ली पेषन्युपस्करः ।
कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन् ॥ २६० ॥
आसां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः ।
पञ्चक्लृप्ता महायज्ञा प्रत्यहं गृहमेधिनाम् ॥ २६१ ॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ २६२ ॥
( मनुः ३।६८–७० )

श्राद्धं वा पितृयज्ञः स्यात् पित्र्योर्बलिरथापि वा ।
यश्च श्रुतिजपःप्रोक्तो ब्रह्मयज्ञ स उच्यते ॥ २६३ ॥ इति ।

अध्यापनस्य ब्रह्मयज्ञवैकल्पिकम् । अत्रापि सम्भवे समुच्चयोऽसम्भवे विकल्पो द्रष्टव्यः । सम्भवे त्रयाणां पितृयज्ञत्वम् । तर्पणस्य पितृयज्ञत्वं बलिदाननित्यश्राद्धाशक्तस्य ।

यदेव तर्पयेदद्भि पितॄन् स्नात्वा द्विजोत्तम ।
तेनैव सर्वमाप्नोति पितृयज्ञक्रियाफलम् ॥ २६४ ॥

नित्यश्राद्धाशक्तस्य बलिदानमात्रं पितृयज्ञः इत्यर्थः । असक्तस्य नित्यस्वाध्यायः पितृभ्यश्चोदकदानं यथोत्साहमन्यदिति ब्रह्मयज्ञतर्पणाभ्यां पञ्चयज्ञकार्यत्रनिष्पत्तिरित्यर्थः ।

लौकिके वैदिके वापि हुतोच्छिष्टे जले क्षितौ ।
वैश्वदेवस्तु कर्त्तव्यः पञ्चसूनापनुत्तये ॥ २६५ ॥

हुतोच्छिष्टः आहवनीयादिः । कर्मालौकिक इत्युक्तरूपः । जले क्षितौ चाग्निस्थापनाङ्गपरिसमूहनाद्यभावः ।

वैवाहिकेऽग्नौ कुर्वीत गृह्यं कर्म यथाविधि ।
पञ्चयज्ञविधानं च पक्तिं वान्वाहिकीं गृही ॥ २६६ ॥
(मनुः ३।६७)

पचनं यदि कुर्वीत प्रवसन्नग्निमान् द्विजः।
समारोपे कृते चाग्नौ वैश्वदेवं च लौकिके ॥ २६७ ॥

शालाग्नौ निर्वपेदन्नं लौकिके वापि नित्यशः।
यस्मिन्नेवं पचेदन्नं तस्मिन् होमो विधीयते ॥ २६८ ॥

शालाग्निरावसथ्यः।
सायंप्रातर्वैश्वदेवः कर्तव्यो वलिकर्म च।
अनश्नतापि सततमन्यथा किल्विषी भवेत् ॥ २६९ ॥
(छन्दोगपरिशिष्टम्)

नित्यं श्राद्धमदैवं स्यान्मनुष्यैः सह गीयते ॥
अप्येकमाशयेद्विप्रं पितृयज्ञार्थसिद्धये ॥ २७० ॥
अद्येवं नास्ति चेदन्यो भोक्ता भोज्यमथापि वा।
अप्युद्धृत्य यथाशक्ति किञ्चिदर्थं यथाविधि ॥ २७१ ॥

## प्रभा

सम्भवे समुच्चयोऽसम्भवे विकल्पो द्रष्टव्य इति। 'संख्याविहितेषु समुच्चयोऽसन्निपातित्वात्" (मीः अः १२, पा, ३, सूः ३०) "विकल्पो वा समुच्चयस्याश्रुतित्वात् (मीः अः १२ पाः ३ सूः ३३) इति मीमांसादर्शनसूत्रे द्रष्टव्ये। तथाचाध्यापनं ब्रह्मयज्ञं च द्वयमेव, कर्तव्यम् असम्भवे एकतरमवश्यकर्तव्यमित्यर्थः। सम्भवे तु तर्पणसहितं प्रागुक्तद्वयमपि कर्तव्यमेव। सायं प्रातर्वैश्वदेव इति दिवारात्रिपरम्। अनश्नता अतिथ्याद्यनुरोधेन पाकसम्भव एव सायमिति वोध्यम्। विष्णुपुराणे "पनः पाकमुपादाय सायमप्यवनीपते। वैश्वदेवनिमित्तं वै पत्न्या सार्धं वलिं हरेत्" ॥ इत्यत्र पुनः पाकमुपादायेत्यभिधानात्। दिवा सम्भवे रात्रौ न कार्यम्। "धर्मविन्नाचरेत् स्नानमाह्निकन्तु पुनः पनः। तर्पणं ब्रह्मायज्ञं च वैश्वदेवं न चाचरेत् ॥ इत्याह्निकतत्त्वधृतमदनपारिजातवचनात्। इदानीं कथञ्चिदनष्ठीयते बृद्धैः। प्रपञ्चस्तु ब्राह्मणसर्वस्वादिग्रन्थेभ्योऽवगन्तव्यः।

पितृभ्यश्च मनुष्येभ्यो दद्यादहरहर्द्विजः ।
पितृभ्य इदमित्युक्त्वा स्वधाकारमुदाहरेत् ॥
हन्तकारं मनुष्येभ्यस्तदन्ते निनयेदपः ॥ २७२ ॥

अन्नोत्सर्गार्थमन्तेऽपः क्षिपेदित्यर्थः । इति वचनात् सनकाद्यन्नदानमपि नित्यश्राद्धाङ्गम् । देवान् पितृन् समभ्यर्च्य खादन् मांसं न दोषभाक् ।

मांसमन्नं तथाग्राह्यं गृहे यच्चोपसाधितम् ॥ २७३ ॥

इति वचनाद् भोज्यं मांसमपि नित्यश्राद्धे देयम् । तथा "पुत्राद्यैरेव चोत्तरा" इति वचनात् ।

प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु ।
क्रियन्ते याः क्रियाः सर्वा उच्यन्ते ता नृपोत्तराः ॥ २७४ ॥

इत्युत्तरक्रियारूपाणि नित्यश्राद्ध-दर्शाष्टकादि-श्राद्धानि अपुत्रपितृव्यादीनां भ्रातृवत्तत्सुतादयः सर्वे कुर्युः । पुत्राभावे भ्रातृपुत्रादीनामधिकारित्व-प्रतिपादनात् । एतद् वैश्वदेवाद्यनुपनीतेन न कर्तव्यम् । स्मार्तकर्ममात्रे उपनीतस्यैव जैमिनिनाऽधिकारित्वप्रतिपादनात् ।

नाभिव्याहरयेद् ब्रह्मस्वधानिनयनादृते ॥ २७५ ॥ इति
अनुपनीतोऽपि कुर्वीत मन्त्रवत् पैतृमेधिकम् ।
यद्यसौ कृतचूडःस्याद् यदि स्यात्तु त्रिवत्सरः ॥ २७६ ॥

इति वचनद्वयं सपिण्डीकरणान्तप्रेतसंस्कारपरम् ।

प्रभा

नभिव्याहरयेदिति ( २।१७२ ) मनुवचने स्वधाशब्देन श्राद्धमुच्यते तन्निर्णीयते निष्पाद्यते येन मन्त्रजातेन तद्वर्जयित्वा मृतपितृको नवश्राद्धादौ मन्त्रानुच्चारयेत् तद्व्यतिरिक्तं वेदं नोदाहरेत्, यस्माद् यावद् वेदे न जायते तावदसौ शूद्रेण तुल्य इति कुल्लुकभट्ट । "एतच्चानुपनीतोऽपि कुर्यात् सर्वेषु पर्वसु । श्राद्धं साधारणं नाम सर्वकामफलप्रदम्' ॥ इति मत्स्यपुराणवचनेऽपि शब्दादुपनीतः समुच्चीयते । "न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः" इति मनुनाकृष्णपक्षीय श्राद्धस्यामावस्यायां विधानात् "भार्याविरहितोऽप्येतत् प्रवासस्थोऽपि नित्यशः । शूद्रोऽप्यमन्त्रवत्-कुर्यादनेन विधिना बुध "इति मत्स्यपुराणवचने: "नित्यश" इत्यनेनमावास्याया

यत्तु पार्वणश्राद्धानन्तरं "एतच्चानुपनीतोऽपि कुर्यात्सर्वेषु पर्वसु' इति मनूक्तं तदपि दर्शादिश्राद्धपरमेव। नित्यश्राद्धे तूपदेशातिदेशयोरभावादकरणम्। सम्बर्तेन तु "ततः पञ्च महायज्ञान्" इत्यनेन विवाहानन्तरं पञ्चयज्ञकरणमुक्तम्। एकपाके निवसतां पितृदेवद्विजार्चनम्।

एकं भवेद् विभक्तानां तदेव स्याद् गृहे गृहे ॥ २७७ ॥

इति वचनात् पितृ-पुत्र-भ्रात्रादीनामविभक्तानामेकेन करणेऽन्येषां प्रत्यवायपरिहारात् सर्वैः पृथग् वैश्वदेवादि न कर्तव्यम्।

एवं सहावसेयुर्वा पृथग् वा धर्मकाङ्क्षया।

पृथग्विवर्धते धर्मस्तस्माद्धर्म्याः पृथक्क्रियाः ॥ २७८ ॥

## प्रभा

यन्नित्यत्वाभिधानं तत् साग्निकपरम्। कृष्णपक्षस्य नित्यत्वाभिधानं च साग्निकभिन्नस्य। तच्चानुपनीतस्य जातमात्राहिताग्नेरुपनीतस्य तु साग्नेः सम्भवतीत्येवमेव तिथितत्त्वकाराः। उपदेशातिदेशयोरिति। उपदेशो विधिः कर्तव्याथापदेश इति यावत्। अतिदेशश्च 'प्रकृतात् कर्मणो यस्मात् तत्समानेषु कर्मसु। 'धर्मोऽतिदिश्यते येन अतिदेशः स उच्यते॥ अन्यधर्मस्यान्यत्रारोपणमिति यावत्। स च शास्त्रातिदेश-कार्यातिदेश-निमित्तातिदेश-व्यपदेशातिदेशरूपातिदेशभेदात्पञ्चधेत्यादिकं श्राद्धविवेकटीकायांमनुसन्धेम्। प्रकृते चानुपवीतेन नित्यश्राद्धादावधिकाराभावादकरणम्। केवलं मातापितृश्राद्धं कर्तव्यमिति भावः।

एकपाके निवसतामिति वचनं तु प्रेतश्राद्धमारभ्य सपिण्डीकरणान्तश्राद्धपरम्। "सपिण्डीकरणं यावत् प्रेतश्राद्धानि षोड़श। पृथक् नैव सुताः कुर्युः पृथग्द्रव्या अपि क्वचित्"॥ इति लघुहारीतवचनात् "नवश्राद्धं सपिण्डञ्च श्राद्धान्यपि च शोड़ष। एकेनैव च कर्तव्यं संविभक्तधनेष्वपि"॥ इति मरीचिवचनाच्च। पृथग्धनाः पुत्राः सर्वे द्रव्यधनादिकं दत्त्वा ज्येष्ठनैव श्राद्धान्येतानि कारयेयुः। तथाच मनुः "मृते पितरि पुत्रेण क्रियाः कार्या विधानतः। वहवः सुर्यदा पुत्राः पितुरेकत्र वासिनः॥ सर्वेषां तु मतं कृत्वाव ज्येष्ठेनैवतु यत्कृतम्। द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेदिति मरीचिरपि। एतेन सर्वेषां पुत्राणां विभक्तानामविभक्तानाञ्च मध्ये ज्येष्ठेनैव श्राद्धान्येतानि कर्तव्यानीति प्रतिपादितम्।

इति वचनादेकेन कृतवैश्वदेवादेः प्रत्यवायपरिहारेऽपि ब्रह्मलोकादिलाभार्थं पृथक् पृथग् वैश्वदेवादिकरणम्। प्रवासे गृहान्तरावस्थाने वा पृथक्पाके यदविभक्तानां पृथग् वैश्वदेवकरणं तद्वैश्वदेवस्य पाकनिमित्तत्वमिति तु भ्रान्तिमूलम्। न हि वैश्वदेवस्य पाको निमित्तं किन्तु पुरुषार्थयोः पाकवैश्वदेवयोः शास्त्रीयपरस्परसम्बन्धः।

अशौचं यस्य संसर्गाज्जायते गृहमेधिनः।
क्रियास्तत्र न लुप्यन्ते गृह्यानां न च तद्भवेत्॥ २७९॥

क्रिया वैश्वदेवादिकर्माणि। गृह्याणां तद्गृह-पुत्रादीनां तद्गृहद्रव्यानां च तदाशौचं नास्तीत्यर्थः। अतः पुत्रादिद्वारा गृहपतेरेव वैश्वदेवादिकर्तव्यमित्यर्थः।

अथाष्टकाश्राद्धम्। "त्रिस्रोऽष्टकास्तिस्रोऽन्वष्टका" इत्यनेनाष्टकान्तरस्य नित्यत्वव्यवच्छेदः।

पितृदानाय मूले स्यूरष्टकास्तिस्र एव च।
अन्वष्टका पितॄणां तु नित्यमेव विधीयते॥
या चाप्यन्या चतुर्थी स्यात् तां च कुर्याद्विशेषतः॥ २८०॥

इति वायुपुराणाच्च। मूले आदौ प्रधानस्थाने अमावास्यायाः स्थाने इत्यर्थः। चतुर्थी। प्रौष्टपद्यूर्ध्वगाष्टमी ; "आग्रहायण्या ऊर्ध्वं तिस्रोऽष्टकाः"। शौनकसूत्रेऽपि हेमन्तशिशिरयोस्त्रयाणामपरपक्षाणामष्टम्यामष्टकाः। पौषादिषु त्रिषु मासेषु कृष्णपक्षेऽष्टका भवेत्। "श्वस्ततोऽन्वष्टका" इति वचनात् अत्र नवमीतिथिर्नियमः। दैवान्न.नवमी तिथि "श्वो भवतीति" श्वः शब्दप्रयोगः कृतः। वस्तुतो नवमीतिथिर्ग्राह्या। अन्वष्टकाशब्देन नवम्याः प्रसिद्धश्चेत्यर्थः।

प्राञ्चस्तु अष्टकाश्राद्धात् परदिनेऽन्वष्टकाश्राद्धम्। "श्वोऽन्वष्टकासु" इति पारस्करसूत्राच्च। अथ "श्वो भूते" इत्यादिश्रुतिषु तथा निर्णयात्।

तथा च तिथिद्वैध्येऽपि अष्टकाश्राश्रात् परदिन एवान्वष्टश्राश्रा कर्तव्यम्। न तु तदुत्तरदिनेऽष्टकादिने वा श्राद्धद्वयमिति वदन्ति। अष्टकादिषु—

"पितरो यत्र पूज्यन्ते तत्र मातामहा अपि।" (गौतमः) इति त्रिपुरुषात्मक पार्वणश्राद्धम्। अन्वष्टकायां तु "मातरि मृतायां मात्रादिभिः सह" इति वचनान्मात्रादि पुरुषत्रयमविकम्।

अन्वष्टकासु वृद्धौ च गयायां च मृतेऽहनि।
अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ॥ २८१ ॥ इति

## प्रभा

अष्टकाश्राद्धमिति। पूपाष्टका-मांसाष्टका-शाकाष्टका इति तिस्रोऽष्टकाः। 'आद्या पूपैः सदा कार्या मांसैरन्या भवेत् तथा। शाकैः कार्या तृतीया स्यादेष द्रव्यगतो विधि"रिति'वायुपुराणवचनात्। तेन पौष-माघ-फाल्गुन-कृष्णाष्टमीष्वेतच्छ्राद्धत्रयं विहितमिति प्रतिपादितम्—"आग्रहायण्या ऊर्ध्व"मिति-वचनात्। चतुर्थी स्यादिति। वर्षासु ज्ञेया। "वर्षासु मेध्यशाकैस्तु चतुर्थ्यामिव सर्वदे"ति ब्रह्मपुराणात्; व्यवहाराभावान्नात्र तद्द विविच्यते। अपि च "अष्टका होति वचनेन नित्यत्वमभिधाय तदनन्तरं चतुर्थी उक्तेति तस्या अनित्यत्वं स्पष्टमेवेति गदाधरपद्धतिकाराः। पश्वभावे स्थालीपाकेन यथा गोभिलः अपि वा स्थालीपाकं कुर्वीतेति। तद्विधानन्तु "स्थालीपाकं पशुस्थाने कुर्याद्द यद्यानुकल्पिकम्। श्रपयेत् तं सवत्सायास्तरुण्या गोपयस्यनु॥ इति छन्दोगपरि-शिष्टीयं ग्राह्यः। अन्विति उदनचरोः पश्चात्। अतएव "पितरः स्पृहयन्त्यन्नमष्टकासु-मघासु च। तस्माद्द दद्यात् सदायुक्तो विद्वत्सु'ब्राह्मणेषु च" ॥ इति शातातपवचने सदेति श्रवणादन्नं प्रधानं पूपादिकं तूपकरणत्वेन शक्तानामावश्यकमिति ध्येयम्।

"पौषादित्रिषु मासेषु कृष्णपक्षेऽष्टका भवेत्। श्वस्ततोऽन्वष्टकास्तिस्रो मातरस्त्वधिका इह। पौषादिष्विति। पौषमाघफाल्गुनानां कृष्णपक्षेष या अष्टम्यस्ता अष्टकापदवाच्याः, तासु षट्पौरुषं श्राद्धं, श्वस्तत इति तत्परा या नवम्यस्ता अन्वष्टकाख्याः। तासु नवपौरुषं श्राद्धं 'मातरस्त्वधिका इहेत्युक्तेः। तत्र

देवतानिवेशक्रमः, विश्वे देवाः पितरो मातरो मातामहा इति । "मातामहानां यः कृत्वा मातॄणां यः प्रयच्छति । तर्पणं पिण्डदानं च नरकं स तु गच्छतीति वचनात् । क्षयाहे केवलाः प्रोक्ता वृद्धौ मुख्यास्तु मातरः । अन्वष्टकासु गध्यस्था गयायां चावसानिका ॥ इति वचनान्तराच्च । मुखे अग्रे भवा मुख्याः प्रथमं स्थाप्य इत्यर्थः । अवसानिका अन्ते स्थाप्याः । इदमन्वष्टकाश्राद्धं मातृमूलकमतएव जीवन्मातृकस्य नाधिकारः । एतयोर्नित्यत्वात् त्रिधाविभक्तेन दिनेन व्यवस्था । तदष्टम्यापराह्णद्वयसम्बन्धे परेद्युः श्राद्धं तत्परेद्युरपराह्णे नवमीलाभश्चेदन्यथा पूर्वेद्युरेव 'श्वस्ततोऽन्वष्टका' इति वचनात् । एवमेव पण्डितसर्व्वस्वकाराः । तथा च तिथिद्वैधे यद्दिनेऽष्टकाश्राद्धं तत्परदिनेऽन्वष्टका न तु नवमी तिथिनियतता । अतएव श्वपदमुपात्तं ।न तु नवमी । तस्मान्नवम्यनुरोधेन परदिनं विहाय तच्छ्राद्धं सर्वथा न कर्तव्यम्. न वैकदिने श्राद्धद्वयमितिसिद्धम् । अपि च "मार्गशीर्षे च माघे च पौषे पौष्ठे च फाल्गुने । कृष्णपक्षेषु पूर्वेद्युरन्वष्टक्यं तथाष्टमो" इति कालादर्शे यदष्टकापञ्चकमुक्तं तच्चतुर्थीविहिताष्टकावदनित्यम् ।

वस्तुतस्तिति । पुराणस्मृत्यपेक्षया गृह्यसूत्रस्य बलवत्तादष्टकाति स्वि प्रदर्शितं तन्न समीचीनम् । तथा च यज्ञवदित्येकसूत्रं, स्त्रीभ्यश्चेत्येकम् उपचेनं सुरया तर्पणेन त्वाञ्जनेनानुलेपनं स्रजश्चेत्येकम् । सूत्रत्रयस्यामर्थः—तत्र प्रथमस्यार्थः—अन्वष्टकासु सर्वासामष्टकानां कर्म भवतीति शेषः । केन द्रव्येणेत्याकाङ्क्षायां पार्श्वसक्तथिसव्याभ्यामिति । पशुसम्वन्धिसव्य (वाम) पार्श्वोरुभ्यामित्यर्थः । परिवृते सर्वतः प्राच्छदिते आवसथ्याग्निसदने । इति कर्तव्यतापेक्षयामाह पिण्डपितृयज्ञवत्अपराह्णे पिण्डपितृयज्ञविधिना । द्वितीयसूत्रार्थः—पिण्डपितृयज्ञवदित्यनेन पित्रादित्रयस्य पिण्डदानं प्राप्तम् । ततोऽधिकमुच्यते स्त्रीभ्यश्चेति । मातृपितामहींप्रपितामहीभ्यः पिण्डान् ददातीति शेषः । चकारः समुच्चये । अत्र सामान्येऽपि स्त्रीशव्दः पित्रादिसान्निध्यान्मात्रादिपरः । अथ तृतीयस्यार्थः—न केवलं स्त्रीभ्यः पिण्डान् दद्यात् किन्तु उपसेचनं कुर्य्यात् । कयेत्याकाङ्क्षायां—सुरया मद्येन । कुत्रेत्याकाङ्क्षायां कर्षुष् ख्यातेषु सपिण्डीकरणेषु । न केवलं सुरया किन्तु तर्पयत्यनेन तर्पणसाधनं सक्थ्यादिना । अज्ज वीराञ्जनं तदभावे लौकिकाञ्जनम् । अनुलेपनं सुगन्धिद्रव्यं चन्दनादि । स्रजः अतिप्रसिद्धसुरभिपुष्पमालाः दद्यादिति शेषः। चकारसमुच्चितान्येतानि दद्यादित्यर्थः । तथाच इदमावसथ्याग्निसदने कर्मान्तरं न त्वष्टकाश्राद्धविषयम् । नात्वष्टकाकर्मणि ! इत्यास्तामतिप्रपञ्चेनेति दिक् ।

तस्मात् पूर्वोक्त देवता निवेशक्रमः साधीयान् ।

अन्वष्टकासु क्रमशो मातृपूर्वं तदिष्यते ।
मातामहानां यः कृत्वा मातणां संप्रयच्छति ।
तर्पणं पिण्डदानं च नरकं चैव गच्छति ॥२८२॥

इति च वचनद्वयं प्रमाणमिति शम्भुकरवाजपेयिभिरागन्तुकानामन्ते निवेश इति न्यायेन मात्रादिश्राद्धमन्ते कर्तव्यमित्युक्तम् ।

वस्तुतस्तु पुराणस्मृत्यपेक्षया गृह्यसूत्रस्य बलवत्त्वात् "अन्वष्टकासु सर्वासां पार्श्वसक्थिसव्याभ्यां परिवृते-पिण्डपितृयज्ञवत् स्त्रीभ्यश्चोपसेचनं कर्षुष्विति-वचनादन्वष्टकाकर्मणि तथादर्शनादन्त एव कर्तव्यम् ।

मातृश्राद्धं छन्दोगैर्न कर्तव्यम्

न योषिद्भ्यः पृथग् दद्यादवसानदिनादृते ॥२८३॥

तथा कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोड़शम् ।
प्रत्याब्दिकञ्च शेषेषु पिण्डाः स्युः षड़िति स्थितिः ॥२८४॥

इति छन्दोगपरिशिष्टविरोधात् । कर्षुसमन्वितं सपिण्डीकरणश्राद्धमिति-विश्वनाथमिश्राः ॥

युगादिश्राद्धम् । माघो माघपौर्णमासो । अत्र व्रीहियवपाकस्या-नियतत्वेन व्यवस्थासम्भवेऽव्यवस्थाया अयोगाद् माघीप्रोष्ठपदयूर्ध्वं कृष्णत्रयोदश्या युगादित्वात् युगादिप्रायपाठेन विधाय प्रायोदर्शनादिति न्यायात्

वैशाखे शुक्लपक्षे तु तृतीयायां जनार्दनः ।
यवानुत्पादयामास युगञ्चारब्धवान् कृतम् ॥२८५॥ (ब्रह्मपुराणे)

इत्येतावतः प्रसिद्धेश्च । वैशाखशुक्लतृतीया-कार्तिकशुक्लनवम्योराश्रयणाद् युगादिचतुष्टयस्यापि नित्यत्वमिति वाजपेयिनः । युगादयो यथा :—

वैशाखशुक्लपक्षे च तृतीयायां कृतं युगम् ।
कार्तिकशुक्लपक्षे च त्रेता तु नवमेऽहनि ॥२८६॥
तथा भाद्रपदे कृष्णे त्रयोदश्यां तु द्वापरम् ॥ २८७ ॥
माघे तु पौर्णमास्याञ्च घोरं कलियुगंमृस्तम
युगारम्भतुतिथयोयुगाद्यास्तेन विश्रुताः॥२८८॥(ब्रह्मपुराणम्)
वैशाखस्य तृतीया या नवमी कार्तिकस्य च ।
अमावास्या च माघस्य नभसस्य त्रयोदशी ॥
युगादयः स्मृता ह्येताः पितृणां तृप्तिहेतवः ॥२८९॥

## प्रमा

युगादिश्राद्धे "वैशाखे शुक्लपक्षे तु" इत्यादौ वैशाखादयः पौर्णमास्यन्ता एव मासा ग्राह्याः। ब्रह्मपुराणे तथैव तिथिकृत्याभिधानात् "कार्तिके शुक्लपक्षे तु त्रेताथ नवमेऽहनीत्यत्र दर्शान्तमासस्य ग्राह्यत्वे कार्तिके नवमेऽहनीत्यनेनैव शुक्लपक्षप्राप्तौ शुक्लपक्षपदोपादनस्यानर्थक्यप्रसङ्गाच्च। "नवम्यां शुक्लपक्षस्य कार्तिके निरगात् कृतमित्यादिमत्स्यपुराणवचनस्य प्रमाणत्वे तत्कल्पान्तरविषयत्वेन समाधेयम्। अत्र श्राद्धे फलश्रवणादस्य श्राद्धस्य काम्यत्वम् "अग्निहोत्रादिनित्यकर्मसु फलोक्तिवत् प्रशंसापरत्वे नित्यत्वम्। "आदित्यसंक्रमणं विषुवद्वयं विशेषेण अयणद्वयं व्यतीपातो जन्मर्क्षनभ्युदयञ्च। एतांस्तु श्राद्धकालान् वै काम्यानाह प्रजापतिः। श्राद्धमेतेषु यद्दत्तं तदानन्त्याय कल्पते॥ इति विष्णुसंहितावचने युगादिश्राद्धस्याग्रहणात्। "अमावस्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टका माघी प्रौष्टपद्यूर्ध्वं कृष्णत्रयोदशी व्रीहियवपाकौ च; एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापति"रिति विष्णुस्मृतिवचने माघी माघपौर्णमासी मघायुक्ता पौर्णमासी माखीति निरुक्तेः, प्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदशी आश्विनकृष्णत्रयोदशीत्यर्थः। व्रीहियवपाकौ चेत्यत्र व्रीहियवपाकोपलक्षितकालमात्राश्रयणं ग्राह्यम्। इति कैमुतिकन्यायेन कार्तिकशुक्लनवमी-वैशाखशुक्लतृतीया च ग्राह्ये। तेन युगादिश्राद्धस्य नित्यत्वमायाति। नित्यत्वे च "इष्टिश्राद्धे क्रतुर्दक्षः सत्यो नान्दीमुखे वसुः। नैमित्तिके कालकामौ काम्ये च धुरिलोचनौ। पुरूरवामाद्रवाश्च पार्वणे समुदाहृतौ" इति बृहस्पतिवचनात् पार्वणश्राद्धवत् पुरूरवोमाद्रोवसोरेव देवतात्वमिति। "तयो"रेव देवतात्वसमाचारः समीचीन इति कालसारः। तस्य नित्यत्वात् त्रिधाविभागेन व्यवस्था श्राद्धं षाट्पुरुषिकं पितरो यत्र पूज्यन्ते तत्र मातामहा अपीति वचनात्। नात्र पिण्डश्राद्धं युगादौ षड़शीत्याञ्चेत्यादि वचनादिति पण्डितसर्वस्वकाराः। अत्र वदन्ति—"अयनद्वितये श्राद्धं विषुवद्वितये तथा। संक्रान्तिषु च सर्वासु पिण्डनिर्वपनादृते। वैशाखस्य तृतीयायां नवम्यां कार्तिकस्य च। श्राद्धं कार्यञ्च शुक्लायां संक्रान्तिविधिना नरैरिति मत्स्यपुराणवचनाभ्यां संक्रान्तौ युगादौ च पिण्डदाननिषेध इति। संक्रान्तिविधिना पिण्डदानेत्तरविधिना। तदसत्। एतयोरनाकरत्वात्। साकरत्वेऽपि "ततः प्रभृति संक्रान्त्यामुपरागादिपर्वसु। त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टमृतेऽहनीति मत्स्यपुराणवचनाद्व विकल्प एव पिण्डदानविधिनिषेधयोः षोड़शीग्रहणाग्रहणवत् पिण्डदाने फलभूमा कल्पनीय इति काशीरामवाचस्पतयः।

ग्रन्थकृन्मते त्वस्य युगादिश्राद्धस्य काम्यत्वं तेन धुरिलोचनयोर्देवतात्वमभिहितं किन्तु राजगुरुगदाधरमते पण्डितसर्वस्वकारमते चास्य श्राद्धस्य नित्यत्वेन पार्वणश्राद्धवत् पुरूरवोमाद्रवसोर्देवतात्वमिति सुधीभिर्विभाव्यमिति संक्षेपः।

इत्यत्र माघामावास्योक्ता कल्पभेदेन बोद्धव्या ।

एता युगाद्याः कथिता पुराणे अनन्तपुण्यास्तिथयश्चतस्रः ।
पानीयमप्यत्र तिलैर्विमिश्रं दद्यात् पितृभ्यः प्रयतो मनुष्यः ॥
श्राद्धं कृतं तेन समाः सहस्रं रहस्यमेतत् पितरो वदन्ति ॥ २९० ॥

कृतं श्राद्धं प्रयत्नेन मन्वादिषु युगादिषु ।
हायणादिद्विसहस्रं पितॄणां तृप्तिमावहेत् ॥ २९१ ॥

इत्यादिफलश्रवणाद् युगादिषु चतुष्टयं काम्यम् । विष्णूक्तश्राद्धचतुष्टयं तु नित्यम् । द्वयोस्तन्त्रेणानुष्ठानमिति विप्रमिश्राः । तन्त्रत्वञ्च केवलकाम्यत्वेन सर्वाङ्गोपसंहाराद् युगादिश्राद्धविहितश्राद्धस्यैव तेन धुरिलोचनयोरेव देवतात्वम् । केवलम्—

अयणद्वितये श्राद्धं विषुवद्वितये तथा ।
युगादिषु च सर्वेषु पिण्डनिर्वपनादृते ॥ २९२ ॥

इति युगादौ पिण्डप्रतिषेधात् पिण्डदानं न कर्तव्यम् । एवञ्च प्रौष्ठपद्यूर्ध्व-त्रयोदशीदिने तद्विहितविष्णूक्तश्राद्धस्य युगादिश्राद्धस्य पक्षश्राद्धस्य मघात्रयोदशी-श्राद्धस्य गजच्छायाश्राद्धस्य तदहः पितृमरणे पितृसाम्वत्सरिकश्राद्धस्य च तन्त्रेणानुष्ठानम् । अत्र कर्मभेदेऽपि देशकालकर्त्रभेदात् सकृदनुष्ठाने सर्वकर्म-सिद्धिर्युगपदेव सर्वापूर्वनिष्पत्तिर्जायत इति ।

व्रीहिपाके च कर्तव्यं यवपाके च पार्थिव !
न तावाद्यौ महाराज ! विना श्राद्धं कथञ्चन ॥२९३॥

इति स्मृत्यन्तरान्नवान्नद्वये पाककालद्वये वृश्चिके मेषे च शुक्लपक्षे भृगुनन्दादिवर्जिते यस्मिन् कस्मिन् दिने श्राद्धद्वयं नित्यम् ।

केचित्तु नित्यश्राद्धेनामावास्यानवान्नश्राद्धं तन्त्रेण कृतं भवतीति पक्षाश्रयणां कुर्वन्ति ।

अथग्रहणश्राद्धम् ।

सर्वस्वेनापि कर्तव्यं श्राद्धं वै राहुदर्शने ।
अकुर्वाणस्तु तच्छ्राद्धं पङ्के गौरिव मज्जति ॥२९४॥

सर्वस्वेनापि शुल्कधनेनापि।

चन्द्रसूर्यग्रहे चैव श्राद्धं विधिवदाचरेत्।
तेनैव सकला पृथ्वी दत्ता विप्रस्य वै करे॥ २९५॥

इत्यादिवाक्यात् संयोगपृथक्त्वन्यायाद् ग्रहणश्राद्धं नित्यं काम्यञ्च। अथ तीर्थश्राद्धम्। तच्च द्विविधं तीर्थप्राप्तिनिमित्तकमेकं श्राद्धम्। यथोक्तफलार्थमन्यत्। तत्र नैमित्तिकमाह—

अकालेऽप्यथवा काले तीर्थश्राद्धं सदा नरैः।
प्राप्तैरेव तथा कार्यं कर्तव्यं पितृतर्पणम्॥ २९६॥

पिण्डदानं ततः शस्तं पितॄणां चापि दुर्ल्लभम्।
विलम्बो नैव कर्तव्यो नैव विघ्नं समाचरेत्॥ २९७॥

अकाले अमावास्याऽपराह्लादिकालाभावेऽपि न तु निषिद्धे तथा रात्रौ चेत् तीर्थप्राप्तिस्तदा तदुत्तरदिने तीर्थप्राप्तिनिमित्तकं श्राद्धं कर्तव्यमिति। पिण्डदानं ततः शस्तम्—असम्भवे पिण्डदानमात्रमपि प्रधानतया कर्तव्यमिति।

शक्तुभिः पिण्डदानञ्च संयावैः पायसेन च।
कर्तव्यमृषिभिर्दृष्टं पिण्याकेन गुड़ेन वा॥ २९८॥
देयं तु तिलपिण्याकं भक्तिमद्भिर्नरैः सदा।
श्राद्धं तु तत्र कर्तव्यमर्घ्यावाहनवर्जितम्।
श्वधाङ्क्षकाकगृध्राणां नैव दृष्टिहतञ्च यत्॥ २९९॥

तर्पणं च पृथक् तीर्थप्राप्तिनिमित्तकं तन्त्रेण स्नानाङ्गतर्पणसिद्धिश्च। तीर्थप्राप्तिदिने स्नानाशक्तस्यापि मन्त्रस्नानादिपूर्वकं तीर्थप्राप्तिनिमित्तकं तर्पणमावश्यकम्। एवं तस्मिन् दिनेऽनेकतीर्थप्राप्तौ श्राद्धं तर्पणञ्चावर्तते। अथ गयायात्राविधिः। भारते तीर्थयात्रापदेनोपक्रम्य क्षेत्र-पुण्यायतन-यात्राया

अपि कथनात् तीर्थपदं शृङ्गिन्यायेन तीर्थसमुदाये यथा तीर्थसमूहो भूमास्ति तथा पुण्यस्थानेष्वपि तीर्थत्वमस्तीति पुण्यस्थानोपलक्षणम्। तेन पुरुषोत्तम-गयाक्षेत्रादावपि तीर्थयात्राविधिर्ज्ञातव्यः। "पिण्याकेनेति किं तिलकल्केनेत्यर्थः।

यो यः कश्चित्तीर्थयात्रां तु गच्छेत्
सुसंयतः स च पूर्वं स्वगेहे ।
कृत्वोपवासः शुचिरप्रमत्तः
संपूजयेद् भक्तिनम्रो गणेशम् ॥

## प्रभा

अथग्रहणश्राद्धमिति संयोगपृथक्त्वन्यायादिति । ग्रहणश्राद्धस्य नित्यत्वं काम्यत्वञ्चेति । ननु काम्यत्वमनित्यत्वम् असति कामे परित्यक्तुं शक्यत्वात्, नित्यत्वञ्चाकरणे प्रत्यवायजनकत्वेन परित्यागानर्हत्वम् । तथा सति एकस्य कर्मणो नित्यत्वकाम्यत्वाभ्यां परित्यागार्हत्व-परित्यागानर्हत्वाभ्यां द्वैरूप्याङ्गीकारे नित्यानित्यसंयोगविरोध इति, चेन्मैवं । संयोगपृथक्त्वन्यायात् । स च न्यायो यथा अग्निहोत्रे श्रूयते दध्ना-जुहोति इति । पुनश्च दध्नेन्द्रियकामस्य जुहुयादिति । तथाग्निसोमीये पशावाम्नायते खादिरे वध्नाति इति । पुनश्च खादिरं वीर्यकामस्य यूपं कुर्यादिति । तत्र सन्देहः । किमत्रान्यन्नित्यार्थमुत नैमित्तिकमेवेति । किं प्राप्तम् । पूर्वेण न्यायेनान्यदिति । एवं प्राप्ते ब्रूमः इति मीमांसादर्शने चतुर्थाध्याये सिद्धान्तसूत्रम्—

"एकस्य तूभयत्वे संयोगपृथक्त्वम्" (५म सूत्रं)

एकस्योभयत्वे नित्यत्वे नैमित्तिकत्वे च संयोगपृथक्त्वं कारणम् । तदिह संयोगपृथक्त्वमस्ति । एकः संयोगो दध्ना जुहोतीति एको दध्नेन्द्रियकामस्येति । तथैकः खादिरे वध्नाति, अपरः खादिरे वीर्यकामस्येति । तस्मान्नित्यार्थे कामाय च दधिखादिरादीति शावरभाष्यम् । एवाञ्चात्र काम्यस्यैव खादिरता किं नित्येऽपि स्यादिति संशये तत्र फलार्थत्वेनानित्यतया नित्यप्रयोगाङ्गता न युक्ता, यतु नित्येऽपि खदिरत्वश्रवणात् तत्काम्यस्यैव पशुवन्धनाय यूपाश्रयज्ञापनार्थमतो न नित्ये खादिरतेत्यादिसंशये सूत्रमिदं सिद्धान्तत्वेनोपन्यस्तम् । सूत्रार्थस्तु—संयोगः सम्बन्धमात्रम्, पृथक्त्वं भेदः । एकस्य खादिरस्य क्रत्वर्थ-पुरुषार्थत्वरूपोभयात्मकत्वे वाक्यद्वयेन च क्रतुशेषत्व-फलशेषत्व-लक्षणसंयोगभेदागमान्न नित्यानित्यसंयोगविरोधः । न चाश्रयज्ञापनार्थं नित्यवाक्यं सन्निधानादेवाश्रयलाभावादत उभयार्था खादिरता । एवं दध्ना जुहोति दध्नेन्द्रियकामस्येत्यादावुभयार्थतैव दधित्वस्य

देवान् पितॄन् ब्राह्मणांश्चैव साधून्,
श्रीमान् प्रीणयन् वित्तशक्त्या प्रयत्नात्।
प्रत्यागतश्चापि पुनस्तथैव
देवान् पितॄन् ब्राह्मणान् पूजयेच्च ॥ ३०० ॥ ( ब्रह्मपुराणे )

अत्रोक्तफलकामनया तीर्थयात्रां सङ्कल्प्य स्वगृहे कृतोपवासो गणेशं पूजयित्वाऽभीष्टदेवं संपूज्य श्राद्धं कृत्वा ब्राह्मणान् पूजयेत्। पितॄन् वित्तशक्त्येत्यनेन विशेषतो धनवता श्राद्धं कार्यम्। प्रत्यागत्य पुनर्देवब्राह्मण पूजनं श्राद्धञ्च। तच्च श्राद्धं घृतप्रधानं पार्वणमेव।

गच्छन् देशान्तरं यत्तु श्राद्धं कुर्याच्च सर्पिषा।
यात्राङ्गमिति तत्प्रोक्तं प्रवेशेन न संशयः ॥ ३०१ ॥

एतावत् सर्वतीर्थयात्राङ्गं नित्यम्। यस्य तु प्रत्यागमनं नास्ति, ततः प्रभृति तीर्थमेवावासस्तस्य प्रत्यागतदेवपूजाद्यभावः।

विधाय कर्पटीं वेशं ग्रामं कृत्वा प्रदक्षिणम्।
ततः प्रतिदिनं गच्छेत् प्रतिग्रहविवर्जितः ॥ ३०२ ॥

## प्रभा

द्वेधा श्रवणादिति सिद्धान्तः। अत्राप्युपदर्शितरित्या न नित्यानित्यसंयोगविरोध इति भावः।

शुल्कधनेनापीति। शुल्कार्जितधनेनेत्यर्थः। एतच्चान्यधनाभावे वोध्यम्। "न्यायार्जितेन वित्तेन कर्म वैदिकमाचरे"दित्यभियुक्तोक्तेः। नात्रकालव्यवस्था। ग्रहणकाल एव विधानात्। तच्च श्राद्धमामान्नेन हेम्ना वा कार्यम्। दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थिते। अन्नेनासम्भवे हेम्ना कुर्यादामेन वा सुतः। विकिरं तृप्तिप्रश्नं च अक्षय्योदकमेव च। आमश्राद्धे न कुर्वीत शेषं पूर्ववदाचरेदिति वचनात्। ग्रहणकाले चाशौचेऽपि स्नानं श्राद्धादिकञ्च कार्यम्। चन्द्रसूर्यग्रहे स्नायात् सूतकेमृतकेऽपि वा। अस्नायी मृत्युमाप्नोति स्नायी पापं न विन्दति॥ इति सूतके मृतके चैव न दोषो राहुदर्शने। तावत्कालं भवेच्छुद्धिर्यावन्मुक्तिर्नदृश्यते। इति च लिङ्गपुराणवचनात्। यत्तु "सूत्रके मृतके चैव न दोषो राहुदर्शने। स्नानमात्रं च कर्तव्यं श्राद्धदानविवर्जितमिति सम्वत्सरधृतवाक्यं तदमूलकत्वादनुपादेयम्।

इति गयायात्राङ्गं नान्यत्र तस्य प्रसङ्गः। प्रयागव्यतिरिक्ततीर्थगमने याननिषेधादर्शनात् तीर्थान्तरे यानेन गमनेऽप्यविरोध इति लक्ष्मीधरः।

यत्तु "एवं गृहस्थाश्रमसंस्थितस्य तीर्थे गतिः पूर्वत्तरैर्निषिद्धा" इति निषिद्धवचनं तत् "सर्वाणि तीर्थान्यपि चाग्निहोत्रतुल्यानि नैवेति वयं वदामः" इति वाक्यशेषेण श्रौताग्निवान्नात्र प्रवासनिषेधपरम्। तस्यापि तीर्थयात्राविधिरेवम्।

श्रोत्राग्निमान् सपत्नीको गच्छेत् तीर्थानि यत्नतः।
सर्वपापविनिर्मुक्तो यथेष्टां गतिमाप्नुयात् ॥ ३०३ ॥

इति। यदा पुनः श्रोत्राग्निमान् अग्नीपत्नीसहितस्तीर्थगमनारम्भसम्भवे तीर्थश्राद्धस्नानादिफललोभात् प्रवसेत्तु तदा तस्य तीर्थश्राद्धस्नानादिफलं तु स्यादेव। "केवलं तीर्थे गतिः पूर्वतरैर्निषिद्धा" इत्यस्य यात्रामात्रविषयत्वन्नैतस्य यात्राफलम्। अविहितप्रवासकरणार्थं तु वैश्वानरी कार्या।

अथ भीष्माष्टमी।

अष्टम्यां च सिते पक्षे भीष्माय च तिलोदकम्।
अन्नं च विधिवद् दद्युः सर्वे वर्णा द्विजातयः ॥३०४॥

इतिवचनान्नित्यम्। सर्वे इत्युपादानात् ब्राह्मणशूद्रयोरप्यधिकारः। द्विजातय इति सम्बोधनम्।

शुक्लाष्टम्यां तु माघस्य दद्याद् भीष्माय भोजनम्।
संवत्सरकृतं पापं तत्क्षणादेव नश्यति ॥ ३०५ ॥

## प्रभा

तीर्थश्राद्धमिति। सुसंयतः पूर्वदिने कृतैकभक्तादिनियमस्तदुत्तरदिने गणेशं ग्रहानिष्टदेवताञ्च सम्पूज्य वृद्धिश्राद्धं कृत्वा ब्राह्मणान् भोजयित्वा शुभलग्ने यात्रां कुर्यात् तीर्थयात्रां तु गच्छेदित्युपक्रमात्। उपवासदिने मुण्डनमपि। प्रयागे तीर्थयात्रायां मातापितृवियोगतः। कचानां वपनं कुर्याद् वृथा न विकचो भवेत् ॥ इति विष्णुपुराणवचनाच्छिखावर्जं केशवपनात्मकमुण्डनञ्च कर्तृसंस्काररूपं

तीर्थस्नानदानश्राद्धरूपकर्माङ्गं कर्तव्यम्। यात्राकाले तीर्थयात्रायामिति प्रत्यागमने च तीर्थप्रत्यागमनोत्तरस्वगृहप्रवेशे इति श्राद्धवाक्ये वक्तव्यम्।

तीर्थं प्राप्य च "गत्वैव तीर्थं कर्तव्यं श्राद्धं तत्प्राप्तिहेतुकम्। पूर्वाह्णेऽप्यथवा प्रातर्देशे स्यात्पूर्वदक्षिणे॥ इति हलायुधवचनात् "अकालेऽप्यथवा काले तीर्थश्राद्धं तथा नरैः। प्राप्तैरेव सदा कार्यं कर्तव्यं पितृतर्पणं। पिण्डदानं तु तच्छस्तं पितॄणाञ्चातिदुर्लभम्। विलम्बो नैव कर्तव्यो नैव विघ्नं समाचरेत्। श्राद्धं तत्र च कर्तव्यमर्घ्यावाहनवर्जितम्॥ इति देवीपुराणवचनाच्च। अकाले पर्युदस्तेतराप्रशस्तकाले, काले प्रशस्तापराह्णादिकाले वा श्राद्धं कर्तव्यम्। तथाच शुचेः प्राप्त्युत्तरविहितकाले प्रथमदिन एव श्राद्धं तेन पूर्वदिने राक्षसीवेलादावागमनेऽपि "आसुरी रात्रिरन्यत्र तस्मात् तां परिवर्जयेत्" इति वचनात् परदिने श्राद्धमविरुद्धम्। तच्च पूर्वदक्षिणे अग्निकोणे। क्षेत्रतीर्थादिषु परकीयत्वाभावात् तत्र यत्र कुत्रापि श्राद्धकरणे न दोषः। "अटव्यः पर्वताः पुण्या नद्यस्तीर्थानि यानि च। सर्वाण्यस्वामिकान्याहुर्न हि तेषु परिग्रहः"॥ इति यमोक्तेः। तेषु परिग्रहः प्रभुत्वं न कस्यचिदपीत्यर्थः। तीर्थे श्राद्धतर्पणयोर्न कालापेक्षा 'अकालेऽप्यथवा काल' इति पूर्वोक्तदेवीपुराणोक्तेः। तीर्थद्रव्योपपत्तौ च न कालमवधारयेदिति हारीतोक्तेश्च। तीर्थश्राद्धे जीवत्पितृकस्याप्यधिकारः। "महानदीषु सर्वासु तीर्थेषु च गयामृते। जीवत्पितापि कुर्वीत श्राद्धं पार्वणधर्मविदिति मैत्रेयगृह्यपरिशिष्टोक्तेः। परार्थतीर्थयाने प्रसङ्गात् तीर्थप्राप्तौ चापि फलं लभते। "षोड़शांशं स लभते यः परार्थेन गच्छति। अर्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति। इति पैठीनसिवचनात्। स्वयं गमनासमर्थस्य प्रतिनिधिद्वारा स्नानेऽपि फलम्। "प्रतिकृतिं कुशमयीं तीर्थवारिणि मज्जयेत्। मज्जयेत् तु यमुद्दिश्य अष्टभागं लभेत सः॥ इति च पैठीनस्युक्तेः। तत्र मन्त्रो यथा—कुशोऽसि त्वं पवित्रोऽसि ब्रह्मणा निर्मितः पुरा। त्वयि स्नाते स च स्नायात् यस्यार्थे ग्रन्थिबन्धनम्। इति सुसंयतस्य तीर्थफलप्राप्तिः। "यस्य पादौ च हस्तौ च मनश्चैव सुसंयतम्। विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते॥ प्रतिग्रहादपावृत्तः सन्तुष्टो येन केनचित्। अहङ्कारविमुक्तश्च स तीर्थफलमश्नुते॥ अकल्कको (दम्भरहितः) निरारम्भो (अर्थार्जनादिव्यापाररहितः) लघ्वाहारो जितेन्द्रियः। विमुक्तः सर्वसङ्गैर्यः (आसक्तिरहितैः) स तीर्थफलमश्नुते॥ "सर्वं तीर्थफलं तस्य यदि भावः सुनिर्मलः"। इत्यादिकमनुसन्धेयं महाभारतादौ।

माघे मासि सिताष्टम्यां सलिलं भीष्मवर्मणे।
श्राद्धं च ये सदा कुर्युस्ते स्युः सन्ततिभागिनः ॥ ३०६ ॥

इतिवचनात् काम्यश्च।

ब्राह्मणो ह्यन्यवर्णस्य यः करोत्यौर्ध्वदेहिकम्।
तद्वर्णत्वमसौ याति इह लोके परत्र च।
सवर्णेभ्यो जलं देयं नासवर्णे कथञ्चन ॥ ३०७ ॥

इति भीष्मकृत्येतरपरम्।

ब्राह्मणाद्यास्तु ये वर्णा दद्युर्भीष्माय नो जलम्।
संवत्सरकृतं पुण्यं तेषां नश्यति सत्तम ॥ ३०८ ॥

इति वचनादपि ब्राह्मणादेरवश्यकर्तव्यत्वात्। वर्णज्येष्ठो ब्राह्मणः पितृ-तर्पणानन्तरमन्यः पूर्वं तर्पयेदिति सम्बत्सरप्रदीपादयः। एकोद्दिष्टत्वा-देकोद्दिष्टश्राद्धकालव्यवस्थया श्राद्धादिकं कार्यम्।

आमश्राद्धम्।

श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रोकीर्तितम्।
अमावास्यादिनियतं माससम्बत्सरादृते ॥३०९॥ (हारीतः)
आपद्यनग्नौ तीर्थे च चन्द्रसूर्य्यग्रहे तथा।
हेमश्राद्धं द्विजो दद्याच्छूद्रो दद्यात्सदैव हि ॥ ३१० ॥ (शातातपः)
तीर्थेऽनग्नावापदि च देशभङ्गे रजस्यपि।
आमश्राद्धं द्विजः कुर्याच्छूद्रः कुर्यात् सदैव हि ॥३११॥
अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि।
हेमश्राद्धं संग्रहे च द्विजः शूद्रः समाचरेत् ॥ ३१२ ॥ (बौधायनः)

पुष्पवत्स्वपि दारेषु विदेशस्थोऽप्यनग्निकः।
अन्नेनैवाब्दिकं कुर्यादिति लोगाक्षिशासनात् ॥ ३१३ ॥ (लोगाक्षिः)

एकोद्दिस्टं तु कर्तव्यं पाकेनैव सदा स्वयम्।

अभावे पाकपात्राणां तदहः स्यादुपोषणम् ॥३१४॥
प्रेतश्राद्धं तु कुर्वीत पक्वान्नेनैव सर्वदा ।
अपत्नीकोऽपि सिद्धान्नैः कुर्याच्छ्राद्धानि षोड़श ।
सपिण्डीकरणादूर्ध्वमामश्राद्धं विधीयते ॥३१५॥

## प्रभा

भीष्माष्टमीकृत्यम् । "सर्वे वर्णा द्विजातयः" इत्यभिधानाद्द्विजातीनां शूद्राणाञ्चाधिकारः महालयादिष्विव नित्यकाम्यत्वात् । केचित्तु भीष्माष्टम्यां नित्यं दिनान्तरे काम्यमिति प्रतिदिनं तर्पणमाचरन्ति । केचित्तु भीष्मस्य वसुत्वात् "वसून् रुद्रान् तथादित्यान् नमस्कारस्वधान्वितान् । एते सर्वस्य पितर एष्वायत्ता हि मानुषाः ॥ इति वसूनां पितृत्वस्मृतेरागन्तुकत्वात् सर्ववर्णानां पितृतर्पणान्ते कार्यं न तु शूद्रादीनां पितृतर्पणात् प्रागिति वदन्ति । भीष्मवर्मणो वसुत्वेन स्पष्टनिर्देशाभावात्-तन्मतं समीचीनं नवेति सुधीभिर्विभाव्यम् ।

ध्रुवो धर्मश्च सोमश्च आपश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभाश्च वसवोऽष्टौ प्रकीर्तिताः" इति पराशरभाष्ये माधवाचार्यधृतपैठीनसिवचनाद्वसवश्च "धरो ध्रुवश्च सोमश्च विष्णुश्चैवानिलोऽनलः (आपो ध्रुवश्च सोमश्च धरश्चैवानिलोऽनलः) । प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ क्रमात् स्मृताः"॥ इति भरतः, महाभारते, श्रीमद्भागवते, कूर्मपुराणेऽग्निपुराणे च वसूनां यानि नामानि वर्तन्ते तेषु कुत्रापि भीष्मदेवस्य नामादर्शनाद्द भीष्मस्य वसुत्वं कथं वा सिध्यतीत्यपि विभाव्यम् । तर्पणमन्त्रस्तु "वैयाघ्रपद्यगोत्राय सांकृतिप्रवराय च । अपुत्राय ददाम्येतत् सलिलं भीष्मवर्मणे" ॥ आशंसावचनं तु—भीष्मः शान्तनवो वीरः सत्यवादी जितेन्द्रियः । आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम्" ॥ अन्नोत्सर्गे तु "वैयाघ्रपद्यगोत्र भीष्मवर्मन् इदमन्नादिकं तुभ्यं स्वधा नमः" इत्युसृज्य "इदं भीष्मवर्मणे" इति त्यागः । जीवत्पितृकेनापि भीष्मतर्पणं कार्यं तस्य नित्यत्वात् किन्तु तस्य यथा पितृ-श्राद्धेऽनधिकारात् नित्यत्वेऽपि भीष्माष्टमीश्राद्धं न क्रियते तथा सामान्यतस्तर्पणेऽनधिकारात् तर्पणमपि न क्रियते एष एवाचारः । केचित्तु माघस्य चाष्टमीं शुक्लामारभ्य दिनपञ्चकम् । तर्पयेदथवाष्टम्यां भीष्मं भागवतोत्तमम्" ॥ नित्यतर्पणतः पश्चात् सलिलान्त उदङ्मुखः । निवीतितर्पणं कुर्याद्द गाङ्गेयस्य महात्मनः" ॥ इति हरिभक्तिविलासधृतवैष्णवकारिकामनुसृत्य दिनपञ्चकं भीष्मतर्पणं समाचरन्ति । "उदङ्मुखः" निवीतीति मतभेदादिति संक्षेपः ।

इति वचनेभ्यो ब्राह्मणो मासिकसांवत्सरिकश्राद्धव्यतिरिक्तानि श्राद्धानि असम्भवे आमान्नेन हेम्ना वा कुर्यात्। शूद्रस्तु मासिक-सांवत्सरिकादीन्यपि सर्वाणि श्राद्धानि आमान्नेन हेम्ना वा विकल्पेन कुर्यात्। अत्र व्रीहियववद् विकल्पः।

दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थितम्।
अन्नेनासम्भवे हेम्ना कुर्यादामेन वा सुतः॥ ३१६॥

इति वचनाद् ब्राह्मणोऽपि श्राद्धकाले सूर्यग्रहणे सति आब्दिकमपि आमेन हेम्ना वा कुर्यात्।

विकिरं तृप्तिप्रश्नश्च अक्षय्योदकमेव च।
आमश्राद्धे न कुर्वीत शेषं पूर्ववदाचरेत्॥ ३१७॥

इति पठति। हेमश्राद्धं तु पितॄनुद्दिश्य प्रत्येकं हिरण्योत्सर्गमात्रं, न तु तत्र श्राद्धेतिकर्तव्यता इति कल्पतरुकारादिभिरलिखनात्।

आमश्राद्धं तु पूर्वाह्णे द्वधे तत्र स्वकालवत्॥ ३१८॥

इति वचनात् पार्वणादिरूपमप्यामश्राद्धं स्वकालपरित्यागेन पूर्वाह्ण एव कर्तव्यमित्याह कालादर्शकारः। केचित्तु ब्राह्मणस्यामश्राद्धकरणप्रसङ्गे पूर्वाह्णकालविधायकमिदं वचनं शूद्रस्य तु पार्वणादिकाले इति वदन्ति। वस्तुतस्तु एतद्वाक्यस्यान्यैरलिखनात्सन्दिग्धप्रामाण्यं न वा कुत्राप्येवं समाचारः।

अथ कृष्णपक्षश्राद्धविचारः।

"अपरपक्षं श्राद्धं कुर्वीत, शाकेनाप्यपरपक्षं नातिक्रमेत्। मासि मासि वोपषणम्" इति श्रुतेः। एवं चानाहिताग्निना पक्षमध्य एकस्मिन् अहनि कर्तव्यम्। आहिताग्निना तु—

"न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः।"

इति वचनाद् दर्श एवेति तन्त्ररत्ने। अमावास्यायामतिप्राशस्त्यमाह निगमः—"अपरपक्षे यदहः सम्पद्यते अमावास्यायां विशेषेणेति"। इदं "शापं दत्वा सुद्धरुणम्" इति वचनान्नित्यं; काम्यं च फलश्रवणाद्।

कन्यागतापरपक्षश्राद्धनिर्णयः ।

सूर्ये कन्यां गते श्राद्धं यो न कुर्याद् गृहाश्रमी ।
कुतस्तस्य धनं प्राणाः पितृनिःश्वासपीड़नात् ॥ ३१९ ॥ ( गार्ग्यः )
हंसे वर्षासु कन्यास्थे शाकेनापि गृहे वसन् ।
पञ्चम्या उत्तरे दद्यादुभयोर्वंशयोर्ऋणम् ॥३२०॥( भविष्ये )

ऋणमिव ऋणं पितृमातृकुलस्य ; इदमवश्यं शोध्यमित्यर्थः ।

नभस्यस्यापरे पक्षे श्राद्धं कुर्याद् दिने दिने ।
नैव नन्दादिकं वर्ज्यं नैव वर्ज्या चतुर्दशी ॥३२१॥ (कार्ष्णाजिनिः )

**प्रभा**

सपिण्डीकरणादूर्ध्वमिति । आमश्राद्धं विधीयते । एतत् तु आपत्कालविषयमिति । शूद्रेण तु मासिकादीनि सर्वाणि श्राद्धानि हेम्ना आमान्नेन वा कर्तव्यानि। आमं शूद्रस्य पक्वान्नं पक्वमुच्छिष्टमुच्यत" इत्यादिवचनात् । विकल्पेनेति । व्रीहियववद्-विकल्पः । यथा "यदाग्नेयोऽष्टकपालः संस्कृतः पुरोडाशो यागाङ्गत्वेनावगतः । तत्रापूपविशेषस्य पुरोडाशस्य प्रकृतिद्रव्याकाङ्क्षायामनियमेन यस्य कस्यचिद् द्रव्यस्य प्राप्तौ "व्रीहिभिर्यजेत" इति वाक्याद् व्रीहयो नियम्यन्ते ; एवं 'यवैर्यजेत" इति वाक्याद् यवा अपि नियम्मन्ते, तयोः पुरोडाशनिष्पादनक्षमत्वेनैकार्थत्वाद् विकल्पः । स चाष्टदोषदुष्टः । "प्रमाणत्वाप्रमाणत्वपरित्यागप्रकल्पना । तदुज्जीवनहानाभ्यां विकल्पे चाष्टदोषता ॥ एवमिष्टोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः । विकल्प आश्रितस्तत्र गतिरन्या न विद्यते" ॥ तथाहि पूर्वं व्रीहिप्रयोगे यवशास्त्रस्य स्वार्थानुष्ठापकत्वलक्षणप्रामाण्य परित्यागः (१) । अननुष्ठापकत्वलक्षणप्रामाण्यस्वीकारः (२) । ततो द्वितीय प्रयोगे यवानुष्ठाने पूर्वं त्यक्तं यत्प्रामाण्यं तत्स्वीकारः (३) । स्वीकृतं यदप्रामाण्यं तत्परित्याग (४) श्चेति यवशास्त्रे चत्वारो दोषाः । एवं पूर्वं यवप्रयोगे व्रीहिशास्त्रस्य स्वार्थानुष्ठापकत्वलक्षणं यत्प्रामाण्यं तत्परित्यागः (५) । अननुष्ठापकत्वलक्षणं यदप्रामाण्यं तत्स्वीकारः (६) । पुनर्द्वितीयप्रयोगे व्रीह्यनुष्ठाने व्रीहिशास्त्रस्य त्यक्तप्रामाण्यस्वीकारः (७) स्वीकृताप्रामाण्यपरित्यागश्चेति (८) व्रीहिशास्त्रे चत्वारो दोषाः । इत्यष्टदोषदुष्टविकल्पोऽत्र परोडाशनिस्पादनक्षमत्वरूपैककार्यकारित्वाद् विकल्प इति भावः ।

विकिरमिति । विकिरः अग्निदग्धाश्चेत्यादिना अन्नदानम् ।

कन्यां गते सवितरि दिनानि दश पञ्च च ।
पार्वणेन विधानेन तत्र श्राद्धं विधीयते ॥३२२॥ ( मात्स्ये )
कन्यां गते सवितरि यान्यहानि तु षोड़श ।
क्रतुभिस्तानि तुल्यानि तेषु दत्तमथाक्षयम् ॥३२३॥
( ब्रह्मपुराणे )
षोड़शेति तिथिवृद्धिमादायोक्तम् ।
मध्ये वा यदि वाप्यन्ते यत्र कन्यां रवि र्व्रजेत् ।
स पक्षः सकलः पूज्यः श्राद्धं तत्र विधीयते ॥३२४॥
( शाठ्यायनिः )
अग्निहोत्री जितक्रोधः स्नातको ब्रतचारिणः ।
पक्षश्राद्धं प्रकुर्वन्ति नेतरत्तु कदाचन ॥३२५॥
अश्वयुक् कृष्णपक्षे तु श्राद्धं कार्यं दिने दिने ।
त्रिभागहीनं पक्षं वा त्रिभागं त्वर्धमेव वा ॥३२६॥ ( ब्रह्माण्डे )

'दिने दिने" इति वीप्सया सकल एकपक्षः । त्रिभागहीनमिति पञ्चम्यादिपक्षः । त्रिभाग इति दशम्यादिपक्षः । एतद्व्याख्यानमनेकाचार्यसम्मतम् । अतएव गौतमः—यथाऽपरपक्षे श्राद्धं पितृभ्यो दद्यात् पञ्चम्यादिदर्शान्तमष्टम्यादिसर्वस्मिन्निति । अत्र पूर्वपूर्वकल्पे फलभूयस्त्वम् । यत्तु शूलपाणिना ।

प्रौष्ठपद्याः परःपक्षस्तत्रापि च विशेषतः ।
पञ्चम्यूर्ध्वं च तत्रापि दशम्यूर्ध्वमतोऽप्यति ॥३२७॥

इति विष्णुधर्मोत्तरवचनात् षष्ठ्याद्येकादश्यादिपक्षावुक्तौ तदपि वैकल्पिकम् । यत्तु तेनोक्तमुत्तरोत्तरलघुकालोपदेशात् सन्निधानाच्च त्रिभागस्यैवार्धं त्रयोदश्यादिपक्ष इति तत्तु विप्रमिश्रैर्बहुधा दूषितमनुसन्धेयम् ॥

## प्रभा

अथकन्यागतापरपक्षश्राद्धविचारः । अश्वयुगिति । अश्वयुक्पदं पौर्णमास्यन्ताश्विनपरम् । प्रौष्ठपद्याः परः पक्ष इति वचनात् । दिने दिने तिथौ तिथौ इति वीप्सा पक्षश्राद्धार्था । दिने दिने इति पञ्चदशतिथिषु पञ्चदशश्राद्धानि दर्शितानि । एवं तिथिह्रासे एकस्मिन्नेव दिने श्राद्धयोग्यतिथिद्वयलाभे श्राद्धद्वयमिति "अहोरात्रवृद्धौ च न श्राद्धवृद्धिरिति शूलपाण्युक्तं न युक्तं नैकःश्राद्धद्वयं कुर्यादिति वाक्यादेकदिने

समानजातीयस्य श्राद्धान्तरस्य निषेधादिति कालसारकाराः। पक्षश्राद्धमभिधाय तत्राशक्तस्य विधानमाह "त्रिभागहीनं पक्षं वेति"। तृतीयो भागस्त्रिभागः। संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वमिष्यत इतिकैयटोक्तेः। तेन हीनं पक्षमित्यर्थः। आद्यस्यापि भागस्य तृतीयत्वं चालनीन्यायेन बोध्यं। कला तु षोड़शो भाग इत्यमरोक्तौ तथा दर्शनात्। तेन त्रिभागहीनं पक्षं वेति षष्ठ्यादिकल्प उक्तः। पञ्चमीमारभ्येत्येकः पक्ष इति वा "प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम्। शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते"॥ इति योगीश्वरोक्तेश्चतुर्दश्या निषिद्धत्वात् तां विना भागत्रयविधानेन पञ्चम्यादिपक्षस्य सुघटत्वात्। तत्र च "उत्तरादयनाच्छ्राद्धे श्रेष्ठं स्याद् दक्षिणायनम्। चातुर्मास्यञ्च तत्रापि प्रसुप्ते केशवे हितम्॥ प्रौष्ठपद्याः परः पक्षस्तत्रापि च विशेषतः। पञ्चमूर्ध्वं च तत्रापि दशम्यूर्ध्वं ततोऽप्यति। मघा युक्तापि तत्रापि शस्ता राजंस्त्रयोदशी" तत्राक्षयं भवेच्छ्राद्धं मधुना पायसेन तु। सर्वस्वेनापि कर्तव्यं श्राद्धमत्र नराधिप। परान्नभोजी त्वपचः श्राद्धमत्र न कारयेत् इति विष्णुधर्मोत्तरप्रथमकाण्डवचनेषु क्रमेण-प्राशस्त्योक्तिरेव न तु सर्वथा षष्ठ्याद्येकादश्यादिपक्षमात्रप्रदर्शनार्थम्। यदा च समस्त एवापरपक्षः सिंहार्के निपतति तदा तं पक्षं विहाय कन्यागतापरपक्ष एव श्राद्धं तत्र चाषाढ्याः पञ्चमत्वमपि नापेक्षितम्। "यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः। तावच्छ्राद्धस्य कालः स्यात् शून्यं प्रेतपुरं तदा॥" इति ब्रह्मपुराण-वचने कन्यायामेव तद्विधानात्। तुलायामपि "यावच्चेति" दर्शनात् सकलकृष्णपक्ष-व्याप्त्यवगतेः 'कार्तिकं सकलं वाप्नोति विष्णुवचनमपि कृष्णपक्षपरमेव। तत्रामावस्याया-मिति प्राशस्त्यमाह भविष्यपुराणे यैयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि। तस्यां दद्यान्न चेत् दत्तं पितॄणां वै महालये"॥ महालये कन्यागतापरपक्षे। पञ्चदशी अमावास्या। त्रिभागमित्यनेनैकादश्यादिकल्प उक्तः, "दशम्यूर्ध्वं ततोऽप्यतीत्युक्तेः। "भौजङ्गीं तिथिमारभ्य यावच्चन्द्रार्कसङ्गमम्" कृष्णपक्षे दशम्यादाविति वाक्यादिति कल्पतरुप्रभृतयः। चतुर्दश्यां येषां श्राद्धं नास्ति तेषां सुतरामेव दशम्यादिपक्षः समीचीनः। अर्धमेव वेति अर्धं पक्षस्येति युक्तमादौ पक्षोपक्रमात्पक्षस्यैव विभाज्य-त्वादर्धभागः पक्षस्यैव तेनाष्टमीमारभ्य इति कल्पतरुकारोक्तिः सुतरां संगच्छते। एतच्च "अथापरपक्षे श्राद्धं पितृभ्यो दद्यात् पञ्चम्यादिदर्शान्तमष्टम्यादिदशम्यादि-सर्वस्मिन्निति" गौतमसूत्रानुगतम्। कात्यायनोऽपि "अपरपक्षे श्राद्धमूर्ध्वं चतुर्थ्या यदहः सम्पद्यते सप्तम्या ऊर्ध्वं यदहः सम्पद्यते, ऋते चतुर्दशीं शाकेनाप्यपरपक्षं नातिक्रमेदिति। अत्र च पूर्वं पूर्वं प्रशस्तं, अङ्गभूम्ना फलभूमेति सिद्धान्तादिति।

यद्यपि कृष्णपक्षस्य पञ्चदशतिथ्यात्मकस्य विभाज्यत्वाद्दिने दिने इति वीप्सया पक्षश्राद्धपक्षः। ततः पञ्चदश श्राद्धानीति। एवं तिथिह्रासे एकस्मिन्नेव दिने श्राद्धयोग्यतिथिद्वयलाभे श्राद्धद्वयमिति तेनोक्तं वदन्ति। नैकः श्राद्धद्वयं कुर्यादिति वचनात् समानजातीयं प्रसिद्धमेवेति हेयम्। उक्तपक्षचतुष्टयाशक्तौ पञ्चम्या ऊर्ध्वमेकस्मिन् दिने श्राद्धं कर्तव्यम्। तथाच पार्वणश्राद्धमभिधायाह देवलः—

अनेन विधिना श्राद्धं कुर्यात् संवत्सरं सकृत्।
त्रिश्चतुर्वा यथा श्राद्धं मासे मासे दिने दिने ॥३२८॥

"दिने दिने" इति वीप्सया श्रुत्या पक्षश्राद्धमवगम्यते।

आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे।
एकस्मिन्नप्यहोरात्रे तत्र श्राद्धं करोति यः।
तस्य सम्वत्सरं यावत्तृप्ताः स्युः पितरो ध्रुवम् ॥ ३२९ ॥

इति स्कन्दपुराणे नागरखण्डवचनं प्रमाणम्। एकदिनश्राद्धकरणपक्षे वर्ज्यमाह—

## प्रभा

एवमेव गोभिलगृह्यसूत्रभाष्ये चन्द्रकान्ततर्कालङ्कारपादाः। शूलपाण्यादिभिस्तु गौतम-कात्यानवचनयोरप्राप्तत्वादुत्तरोत्तरलघुकालोपदेशात् सन्निधानाच्च त्रिभागार्धप्रतीते रित्युक्तम्।" उत्तरोत्तरलघुकल्पोपदेशे प्रमाणाभावाच्चेति मिश्राः। त्रिभागमित्यादौ भागितया बुद्धिस्थीकृतपक्षस्य परित्यागे मानाभावात्। अपि चोपक्रमस्य श्रुत्यनुरोधेन दुर्बलस्य क्रममात्रस्य वाधेऽपि न क्षतिः। सर्वत्र पक्षपदानुषङ्गं विनाऽनन्वयात् पक्षस्यैवानन्तरनिर्दिष्टत्वम्। न चैवकारवैयर्थ्यंमतोन्यूनकालाभावा दर्धं कुर्यादेवेति तात्पर्य्यचिति वाच्यं महालयायां केवलायामपि श्राद्धानुष्ठानविधानदर्शनादेवकारेण मासादेरपि व्यवच्छेदस्योक्तत्वाच्च। न चार्द्धपदस्य त्रिभागपदसन्निधानात् तस्यैवार्धत्वं युक्तमिति वाच्यम्—उपक्रमानुरोधेन पक्षस्यैव प्राप्तत्वात्, मासादित्वव्यवच्छेदाय पक्षभागान्वयेन पक्षोपस्थितेः पक्षस्यैव सान्निध्याद्ग गौतमकात्यायनवचनेषु स्पष्टतः पक्षार्धस्यैव विधानदर्शनाच्चेति सुधीभिर्विभाव्यम्। एतेन विप्रमिश्रै र्बहुधा दूषितमनुसन्धेयमिति ग्रन्थकृदुक्तिर्व्याख्याता।

त्रिजन्मनि त्रिपापेषु कविनन्दामघासु च ।
काम्यश्राद्धं न कुर्वीत व्यतिपाते दिनक्षये ॥ ३३० ॥

इति त्रिजन्मनि जन्मनक्षत्र-तिथि-चन्द्ररूपे इति कालादर्शकारः ।

नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि ।
एषु श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् ॥ ३३१ ॥
प्राजापत्ये च पौषे च पित्रर्क्षे भार्गवे तथा ।
यस्तु श्राद्धं प्रकुर्वीत तस्य पुत्रो विनश्यति ॥ ३३२ ॥

इति पक्षादिप्रकारचतुष्टयाशक्तावाहिताग्निश्चन्द्रक्षयविशिष्टदर्शे एवापरपक्षश्राद्धं कुर्यात् । निरग्निस्तु अन्यतिथौ केवलदर्शे वा ।

अथ दीपदानविचारः । यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः ।
तावच्छ्राद्धस्य कालः स्यात् शून्यं प्रेतपूरं तथा ॥३३३॥

इति वचनात् कन्यागतापरपक्षे श्राद्धासम्भवे तुलायां सर्वत्र प्राप्तौ तिथिविशेषनियममाह—

येयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि ।
अस्यां दद्यान्नचेद्दत्तं पितॄणां वै महालये ॥ ३३४ ॥

महालये कन्यागतापरपक्षे, दीपान्विता, पञ्चदशी कार्तिकामावास्या, अस्याममावास्यायां दीपदानम् ।

तुलां प्रत्यागते सूर्ये अमावास्यातिथिर्भवेत् ।
उपास्तसमये दीपान् पितॄन्दद्याच्छुचिः शुचिः ॥ ३३५ ॥ (वाक्यरत्नावल्यां)

उपास्तसमयः त्रिमुहुर्तात्मकः प्रदोषकालः ।

तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयोः ।
उल्काहस्ता नराः कुर्युः पितॄणां मार्गदर्शनम् ॥ ३३६ ॥ (ज्योतिषे)
अमा वसन्ति यद्रात्रे तत्र दीपं प्रदापयेत् ।
तर्पणं पिण्डदानञ्च श्राद्धञ्चैवापरेऽहनि ॥ ३३७ ॥

यदा तु उभयत्र प्रदोषव्याप्तिस्तदा —

दण्डैके रजनीयोगे दर्शस्य स्यात् परेऽहनि ।
तदा विहाय पूर्वेद्युः परेद्युः सुखरात्रिका ॥ ३३८ ॥

इतिवचनात् परदिने दीपदानम् । उभयत्र प्रदोषाव्याप्तौ तु—

भूताहे ये प्रकुर्वन्ति उल्काग्रहमचेतसः ।
निराशाः पितरो यान्ति शापं दत्त्वा सुदारुणम् ॥ ३३९ ॥

इतिवचनात् परदिने दीपदानम् ।

सन्न्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद् यथाविधि ।
महालये तु यच्छ्राद्धं द्वादश्यां पार्वणेन तु ॥३४०॥

पार्वणेन विधिनेत्यर्थः ।

मघात्रयोदशीश्राद्धं गयाश्राद्धसमं विदुः ।
श्राद्धं तत्रापि कर्तव्यं तेस्तैर्द्रव्यैः सुसञ्चितैः ।
त्रयोदश्यां प्रयत्नेन वर्षासु च मघासु च ॥ ३४१ ॥

इति वचनात् प्रौष्टपद्यूर्ध्वं मघायुक्तकृष्णत्रयोदश्यामनिषिद्धवत्किञ्चिद्द्रव्येण श्राद्धं कार्यम् । अत्र पुत्रवता पिण्डरहितमेव श्राद्धं कार्यम् ।

मघायां पिण्डदानेन ज्येष्ठपुत्रो विनश्यति ॥ ३४२ ॥

इति वचनात् ज्येष्ठः प्रथमोत्पन्न इति विद्याधरः । विद्यमानपुत्राणां ज्येष्ठ इति मदनपारिजातः । केवलमघायां केवलत्रयोदश्यां च श्राद्धविधायकवचनं तु विध्यन्तरकल्पनागौरवयुक्तानुवादः ।

प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् ।
प्राप्य श्राद्धं हि कर्तव्यं मधुना पायसेन च ॥३४३॥

## प्रभा

प्रदोपामावास्याश्राद्धम् । ज्योतिषे "तुलाराशिगतेसूर्ये अमावस्यां नराधिप । स्नात्वा देवान् पितॄन् भक्त्या संपूज्याथ प्रणम्य च ॥ कृत्वा तु पार्वणश्राद्धं दधिक्षीरगुड़ादिभिः । ततोऽपराह्णसमये घोषयेन्नगरे नृपः । लक्ष्मीः संपूज्यतां लोका उल्काभिश्चापि वेष्ट्यताम् । दर्शद्वैधे "तुलासंस्थे संहस्रांशौ प्रदोषे भूतदर्शयोरि"त्यादिवचनात् प्रदोषप्राप्तिर्ग्राह्यः, उभयत्र प्रदोषप्राप्तौ "दण्डैक-रजनीयोगो दर्शस्य स्यात् परेहनीति वचनात् तत्परदिने, युग्माच्च । उभयत्रप्रदोषाप्राप्तौ उल्कादानं परदिने पूर्वोक्तपर्वण्यानुरोधात् "भूताहे ये प्रकुर्वन्तीत्यादि ज्योति र्वचनाच्च । उल्काग्रहणस्य

**प्रभा**

पितृकृत्यत्वात् प्राचीनावीतिना दक्षिणामुखेन कार्यम्। "प्राचीनावीतिना सम्यगपसव्यमतन्त्रिणा। पित्र्यमानिधनात् कार्यं विधिवद्दर्भपाणिनेति मनुवचनात्। तत्र ग्रहणमन्त्रः "शस्त्राशस्त्रहतानाञ्च भूतानां भूतदर्शयोः। उज्ज्वलज्योतिषा देहं दहेयं व्योमवह्निना। दानमन्त्रः—"अग्निदग्धाश्च ये जीवा येऽप्यदग्धा कुले मम। उज्ज्वलज्योतिषा दग्धास्ते यान्तु परमां गतिम्॥ विसर्जनमन्त्रः—यमलोकं परित्यज्य आगता ये महालये। उज्ज्वलज्योतिषा वर्त्म प्रपश्यन्तो व्रजन्तु ते॥ इति ब्रह्मपुराणात्। भूताहे चतुर्दशीदिने। मघात्रयोदशीश्राद्धम् "अथ प्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदश्यां मघायुक्तायामनिषिद्धद्रव्येण श्राद्धमावश्यकं, शङ्खादि विधिवाक्ये नक्षत्रविशिष्टतिथिश्रुतेः। ततश्च केवलत्रयोदशी केवलमघाश्राद्धार्थवादा अपि क्लृप्तविशिष्टविधिप्राप्तकर्मणो नित्यत्वबोधका न तु केवलविध्यन्तरकल्पका गौरवादितितिथितत्त्वकाराः। अत्र 'श्राद्धार्थवादा अपी' इत्यत्र श्राद्धानुवादा अपीति पाठो भवितुं युक्तः, विधिसमभिव्याहृतफलश्रुतिरर्थवादः, प्राप्तप्रापकोऽनुवादः, इति तयोर्भेदादत्र प्राप्तस्य मघायुक्तायां कृष्णत्रयोदश्यां श्राद्धं कुर्यादिति क्लृप्तविधेः केवलमघायां केवलत्रयोदश्यां वा श्राद्धं कुर्यादिति कल्पितविधिरनुवादः। तेन क्लृप्तः कल्पितो यो विशिष्टविधिः, मघायुक्तायां त्रयोदश्यामित्यादिरूपो विशिष्टविधिः। अत्र प्राप्तस्य विधिरूपस्य कर्मणो नित्यत्वबोधका अर्थवादाः। "तत्र क्लृप्तविधिशेषत्वे सम्भवति कल्प्यविधिशेषत्वमन्याय्यमतः क्लृप्तविध्यनुरूपैव स्तुतिरनेन कार्या, विधौ च मघायोगः श्रूयते इति श्राद्धविवेककाराः। क्वचिदवसीदन्ती विधिशक्तिः स्तुत्यादिभिरुत्तम्भ्यते इति प्ररोचना चाङ्गतयोपयुज्यते" इत्यर्थवादकार्यमिति। प्रकृते च "गौरवादवयुत्यनुवाद "इति यद्ग्रन्थे लिखितं तत्र "एव क्लृप्तानुवादः" इति पाठो भवितुं युक्तः। अत्र कालसारकारास्तु "तन्न रुचिरमिति कृत्वा "नित्य शब्दोपादानानुपपत्तेः। अमावास्या तिस्रोऽष्टका इत्यादि विष्णूक्त्यादिना केवल त्रयोदश्यां श्राद्धसमाचाराच्च। इति केवलमघायां यच्छ्राद्धं तत्काम्यं। तथा मघायुक्तत्रयादश्यामपि काम्यं केवलत्रयोदशीश्राद्धं तु नित्यमेवेति सर्वं समञ्जसम्। गजच्छाया योगे तु फलाधिक्यमिति प्राहुः। "अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्याद्दिने दिने" इत्यनेनैव त्रयोदश्यामपि श्राद्धस्य नित्यतया प्राप्तत्वात्। "प्रौष्ठपद्यामतीतायां तथा कृष्णात्रयोदशी। एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः" इति विष्णुधर्मोत्तरवचनाद्द केवलायां कृष्णत्रयोदश्यामपि नित्यत्वाभिधानाच्च। "यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते। तथा वर्षात्रयोदश्यां मघासु च विशेषतः"

यत्किञ्चिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम् ।
तदप्यक्षयमेव स्याद् वर्षासु च मघासु च ॥३४४॥ ( मनुः )
मघायुक्ता च तत्रापि शस्ता राजन् ! त्रयोदशी ।
तत्राक्षयं भवेच्छ्राद्धं मधुना पायसेन च ॥३४५॥ ( विष्णुधर्मोत्तरे )

इत्यक्षयफलकामनया मधुपायसाभ्यां श्राद्धं कर्तव्यम् । अत्र गजच्छाया-योगे फलातिशयः ।

कृष्णपक्षे त्रयोदश्यां मघास्विन्दुः करे रविः ।
यदा तदा गजच्छाया श्राद्धं पुण्यैरवाप्यते ॥३४६॥
( कृत्यकिन्तमणिधृतास्मृतिः )
यदेन्दुःपितृदैवत्ये हंसश्चैव करे स्थितः ।
याम्या तिथिर्भवेत्सा हि गजच्छाया प्रकीर्तिता ॥३४७॥ ( यमः )

करेहस्तानक्षत्रे ।

समत्वमागतस्यापि पितुः शस्त्रहतस्य वै ।

## प्रभा

इति याज्ञवल्क्योक्तेः, "यत् किञ्चित् मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम् । तदप्यक्षयमेव स्याद्वर्षासु च मघासु च" "इति मनूक्तेः मघायां काम्यत्वप्रतीतेश्च । अत्र मधुसर्पिषोर्दानमक्षयफलकामिन एव न तु सर्वेषां नियतम् । इति सुधीभिश्चिन्त्यम् । पितृदैवत्यं मघा, याम्यातिथिः त्रयोदशी । करे हस्तानक्षत्रे । मघास्विन्दुरिति "उनिहचिद्विकन्यका" इति नियमादाश्विनस्य दशदिनात् परं हस्तानक्षत्रपातः स्यात्, तन्नक्षत्रे च सूर्यस्य स्थितिर्विंशतिदण्डाधिकत्रयोदशदिनं यावत्, तन्मध्ये यदि त्रयोदश्यां मघानक्षत्रे चन्द्रस्तिष्ठति तदा गञ्जच्छायायोगो भवतीति । तेन सौराश्विनस्य दशदिनात्परं विंशतिदण्डाधिकत्रयोदशदिनमध्ये हस्तानक्षत्रे रविस्थितौ गजच्छायायोगः । पुण्यैरिति पुण्यविशिष्टजनैरित्यर्थः । अत्र च मनुवचने यत्किञ्चिन्मधुना मिश्रमित्यनेन मधुमात्रयुक्तत्वाभिधानाच्छूद्र-स्याप्यधिकारः ।

शस्त्रहतानां तु कृतसपिण्डनस्यापि तत्पुत्रादिभिर्महालयायामप्येकोद्दिष्टं कार्यम् । शस्त्रहतसंज्ञा च पारिभाषिकी । वक्ष्यति च "पक्षिमत्स्यमृगैः सर्पैर्हता" इत्यादिवचनेषु । अत्र मघात्रयोदशी श्राद्धे सर्वेषां नाधिकारः । विधिवदिति षाट्पुरुषिकश्राद्धं कुर्यादित्यर्थः ।

एकोद्दिष्टं तु कर्तव्यं चतुर्द्दश्यां महालये ॥३४८॥ ( मरीचिः )
पक्षिमत्स्यमृगैर्येतु शृङ्गिदंष्ट्रिनखैर्हताः ।
पतनानशनप्रायैवज्राग्निविषवन्धनैः ।
मृता जलप्रवेशेन ते वै शतस्त्रहताः स्मृताः ॥३४९॥ ( भगवतीपुराणे )
सर्पैर्हता रणे व्याघ्रैः कुम्भीराश्वगजैर्वृषैः ।
उत्पातेन च वज्रैश्च तेषां दद्याच्चतुर्द्दशीम् । ३५०॥ ( वृहन्मनुः )
बिषशस्त्रश्वापदादितिर्य्यग ब्राह्मणघातिनाम् ।
चतुर्द्दश्यां क्रियाः कार्य्या अन्येषाञ्च विगर्हिताः ॥३५१॥ (मरीचिः)

घातोऽस्यास्तीति घाती। तैर्हतानित्यर्थः। वसन्ते ब्राह्मणोऽग्नीनादधीतेतिवदुभयनियमः। शस्त्रहतस्य चतुर्द्दश्यामेव, नान्यतिथौ। चतुर्द्दश्यां शस्त्रहतस्यैव नान्येषामिति ॥ श्राद्धं करुणया कुर्य्यादपुत्रस्य महालये।
एकोद्दिष्ठेन विधिना न कुर्य्यात् पुत्रिणः क्वचित् ॥३५२॥ इति

अथ साम्वत्सरिकश्राद्धनिर्णयः ।

---

प्रतिसंवत्सरं कार्य्यं मातापित्रोर्मृतेऽहनि ।
पितृव्यस्याप्यपुत्रस्य भ्रातुर्ज्येष्ठस्य चैव हि ॥३५३॥
श्राद्धानां चैव सर्वेषां ज्येष्ठं साम्वत्सरं स्मृतम् ।
तत्प्रयत्नेन कुर्वीत अकुर्वन्नरकं व्रजेत् ॥३५४॥ ( शतानन्दसंग्रहे )

## प्रभा

पितृदैवत्यं मघा, याम्यातिथिः-त्रयोदशी

उभयनियम इति। वसन्ते ब्राह्मणोऽग्नीनादधीतेति। वसन्ते ब्राह्मणानामग्न्याधानं नान्येषां, ब्राह्मणानामेव वसन्ते नान्यस्मिन्काले "इतिवदत्रापीति" शस्त्रहतस्येत्यादि वक्ष्यति। सांवत्सरिकश्राद्धम्। नैमित्तिकस्य वार्षिकश्राद्धस्यावश्यकर्तव्यत्वमाह-भविष्ये—"मृतेऽहनि पितुर्यस्तु न कुर्य्यच्छ्राद्धमादरात्। मातुश्चैव वरारोहे वत्सरान्ते मृतेऽहनि। नाहं तस्य महादेवि पूजांगृह्णामि नो हरिः। "अकुर्वन्नरकं ब्रजेदिति" शतानन्दसंग्रहवचने दोषश्रुतेर्नित्यत्वमपि।

मासपक्षतिथिप्रख्ये यो यस्मिन् म्रियतेऽहनि ।
प्रत्यब्दं तु तथाभूते क्षयाहं तस्य तद्विदुः ॥ ३५५ ॥ (व्यासः)

तच्च श्राद्धमेकोद्दिष्टं पार्वणं वा कार्य्यम् ।

एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टं प्रकीर्तितम् ।
त्रीनुद्दिश्य तु यत् तद्धि पार्वणं मुनयो विदुः ॥ ३५६ ॥ (कण्वः)

तत्र नानामुनिवचनात् पार्वणैकोद्दिष्टयोर्विकल्पः । एवं सति पार्वणैकोद्दिष्टनिन्दावाक्यानि उदितानुदितहोमवद् विधिद्वयस्तावकानि बोध्यानि । कर्कभाष्यादिभिः कुलव्यवस्थया कर्तव्यमित्युक्तम् । केवलमग्निमता तु मृताहश्राद्धं पार्वणविधिना एव कर्तव्यम् ।

यत्र यत्र प्रदातव्यं सपिण्डीकरणात्परम् ।
पार्वणेन विधानेन देयमग्निमता सदा ॥ ३५७ ॥

इतिमत्स्यपुराणवचनात् । तथा—

अमायां वा क्षयो यस्य प्रेतपक्षेऽथवा यदि ।
पार्वणं तस्य कर्तव्यं नैकोद्दिष्टं कदाचन ॥ ३५८ ॥ इति । (शङ्खः)

मलमासमृतानां तु श्राद्धं यत् प्रतिवत्सरम् ।
मलमासेऽपि कर्तव्यं नान्येषां तु कदाचन ॥ ३५९ ॥ (पैठीनसिः)

प्रतिवत्सरं प्रत्याब्दिकम् । पुनर्मलमासे मृतानामुत्तरमासे कार्य्यम् ।

चन्द्रोऽधिमासोऽसंक्रान्तः सोऽन्तर्भवति चोत्तरः ॥ ३६० ॥

इति माधवाचार्यवचनात् । चान्द्रमासव्यवस्था तु चैत्रान्तः प्रतिपदादि, दर्शान्तमासस्य चैत्रत्वमेवं रीत्यागत्याऽनया बोध्या । त्रिदण्डिसन्न्यासिनां मृताहे पार्वणश्राद्धमेव ।

दण्डग्रहणमात्रेण नैव प्रेतो भवेद् यतिः ।
अतः सुतैर्न कर्तव्यं पार्वणं तस्य सर्वदा ॥ ३६१ ॥ इति ।

एकोद्दिष्टं जलं पिण्डमशौचं प्रेतसत्क्रियाम् ।
न कुर्य्यात् पार्वणादन्यद् ब्रह्मभूताय भिक्षवे ॥ ३६२ ॥

एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह ।
सपिण्डीकरणाभावात् पार्वणं तस्य सर्वदा ॥ ३६३ ॥

सन्न्यासिनां साम्वत्सरिकं श्राद्धं निरामिषं कर्तव्यम् । "प्रति सम्वत्सरं सन्न्यासिनां निरामिषं पार्वणश्राद्धं कुर्य्यादि"ति यतिसर्वस्वलिखनात् । अमावस्याश्राद्धं तु यतीनामपि सामिषमेव । एवं ब्रह्मचारिणां विधवानां श्राद्धमात्रं सामिषं कर्तव्यम् । तत्र निषेधाभावात् ।

अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये ।
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम् ॥ ३६४ ॥

इत्यापस्तम्बवचनात् । अग्निमतापि कुलव्यवस्थया पार्वणपक्षाश्रयिणापि निरग्निना चामावस्याप्रेतपक्षमृतानामपि पुत्ररहितानां पुरुषाणां स्त्रीणाञ्चैकोद्दिष्टविधिनैव श्राद्धं कार्य्यम् ।

दैवादशौचादिना वाऽकृतस्य विस्मरणादिनाऽविदितमृताहतिथिकस्य च साम्वत्सरिकश्राद्धस्य वाचनिकप्रतिनिधिकालः—

श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृताहनि ।
कुर्य्यादनेन कृष्णैकादश्यामिन्दुक्षयेऽपि वा ॥३६५॥
श्राद्धविघ्ने समुत्पन्ने मृताहाविदिते तथा ।
एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः ॥३६६॥

कृष्णपक्षैकादश्याममावास्यापेक्षया विशेषतः कुर्वीतित्यर्थः । विघ्नोऽत्र द्रव्याद्यसम्पत्तिकृतः ।

आपन्नोऽप्याब्दिकं नैव कुर्य्यादामेन कर्हिचित् ।
अन्नेन तदमायां तु कृष्णे वा हरिवासरे ॥३६७॥

### प्रभा

पार्वणैकोद्दिष्टयोर्विकल्पः इति । निरग्निका अपि केचन साग्निकवत्कुलाचारव्यवस्थया पार्वणश्राद्धं कुर्वन्ति । "येनास्य पितरो याता येन याता पितामहाः । तेन यायात्सतां मार्गं तेन गच्छन् न दूष्यती"तिवचनात् ।

मलमासमृतानां त्विति पैठीनस्युक्तेर्यो यस्मिन् मलमासे मृतः कालान्तरे तस्मिन्नेव मासे मलमासे सति तस्य तत्रापि श्राद्धमिति । वर्षान्तरेषु श्राद्धे तस्मिन्नेव मासे मृततिथौ श्राद्धम् ।

अशौचेन विघ्ने तु,

देये पितृणां श्राद्धे तु अशौचं जायते यदि ।
तदशौचव्यतीते तु तेषां श्राद्धं विधीयते ॥३६८॥ (ऋष्यशृङ्गः)
शुचीभूतेन दातव्यं या तिथिः प्रतिपद्यते ।
सा तिथिस्तस्य कर्तव्या न त्वन्या वै कदाचन ॥३६९॥ (ऋष्यशृङ्गः)

देये अवश्यकर्तव्ये आब्दिकादौ । कर्तव्यकरणार्हा, न त्वन्या । अमावस्या वा कृष्णैकादशी वाऽशौचकृतविघ्ने प्रतिपक्षणीया इत्यर्थः । अशौचानन्तरासम्भवे तु अमावस्यायां कुर्यात् ।

देये प्रत्याब्दिके श्राद्धे त्वन्तरामृतसूतके ।
अशौचानन्तरं कुर्य्यात् तन्मासेन्दुक्षयेऽपि वा ॥३७०॥ इति (गोभिलः)
श्राद्धविघ्नसमुत्पन्ने मृते रजसि सूतके ।
वदन्ति शुद्धौ तत्कार्य्यं दर्शे वापि मणीषिणः ॥३७१॥

मृतकरजःसूतादिरूपे श्राद्धविघ्ने इत्यर्थः । अमावस्या-युगाद्यष्टकादिश्राद्धानां तु स्वकालातिक्रमे पश्चादकरणमेव । यतो मृताहश्राद्धविघ्न एव हि पश्चात्करणे तिथयः कथिताः । "मृताहाविदिते तथे"ति वाक्यशेषादशौचान्तदिने मलमासपाते तु मलमासोत्तरभाविदर्शे एव श्राद्धं कार्यम् ।

## प्रभा

अथविघ्नपतितश्राद्धकालविचारः । तत्र लघुहारीतोऽपि "श्राद्धविघ्ने समुत्पन्ने मृताहाविदिते तथा । एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः" । तथाच राजमार्तण्डे— "श्राद्धविघ्ने समुत्पन्ने अन्तरामृतसूत्रके । एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः ।" एतच्च श्राद्धमवश्यकर्तव्यप्रेतैकोद्दिष्ट-सांवत्सरिकश्राद्धादिपरं, न त्वमावास्यादिनैमित्तिकश्राद्धपरम् । "देये पितृणां श्राद्धे तु अशौचं जायते यदि । तदशौचे व्यतीते तु तेषां श्राद्धं विधीयते ॥" इत्यादिऋष्यशृङ्गवचनात् "देये प्रत्याब्दिके श्राद्धे त्वन्तरा मृतसूतके । अशोशानन्तरं कुर्यात् तन्मासेन्दुक्षयेऽपि वा" इति गोभिलवचनाच्च । प्रेतश्राद्धे विघ्ने समुत्पन्ने यदि ततः परं कृष्णैकादश्यादिकं न लभ्यते परमासिकश्राद्धकालश्च समापतति तदा "एकोद्दिष्टे तु संप्राप्ते यदि विघ्नः प्रजायते मासेऽन्यस्मिंस्तिथौ तस्मिन् तदा कुर्याद्ध प्रयत्नतः ।" इति देवलवचनात् परमासीय-

मृततिथौ पतितमासिकमादौ कृत्वा ततस्तन्मासिकं कार्यं क्रमभङ्गप्रसङ्गात्। न च मृताहेतरक्रियमाणानामाद्यषान्मासिकद्वयश्राद्धानां मृततिथिकर्तव्यत्वाभावात् तत्तच्छ्राद्धानां कर्तव्यत्वं न स्यादिति चेन्न तदादितदन्तन्यायात्। पतितेषु तेषु श्राद्धेषु यथाक्रमं कृत्वा परश्राद्धं कर्तव्यं "यथाक्रमेण पुत्रेण कार्या प्रेतक्रिया सदा पतिताऽपतिता वापि एकोद्दिष्टविधानतः"॥ इति जावालवचनात्— "व्युत्क्रमात् प्रेतश्राद्धानि यो नरो धर्ममोहितः। ददाति नरकं याति पितृभिः सह शाश्वतम्"। इति देवलवचनाच्च। एतेन प्रथममासिक-त्रैपक्षिक-द्वितीयमासिकादिक्रमेण पञ्चममासिक-प्रथमषान्मासिक-षष्ठमासिकादिक्रमेणएकादशमासिक द्वितीय-षान्मासिक द्वादशमासिकादिश्राद्धानां क्रमो दर्शितः।

अत्रेदंचिन्तनीयम्—स्मार्त-रघुनन्दनमत्ते सूतकमृतकादिना "श्राद्धविघ्नेसदुत्पन्ने." "नत्वन्या वै कदाचन" इति ऋष्यशृङ्गवचनान्न तत्र अन्या कृष्णैकदशी प्रतीक्षणीया। "एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः" इति तु "विशेषतः" इत्यमावास्यापेक्षया न तु शुक्लपक्षैकादश्यपेक्षयेति। एतन्मते दर्शोऽपि कृष्णैकादशीवद्व विकल्पो दर्शितः। सुतरां विशेषत इति शुक्लपक्षीयैकादश्यपेक्षयेति सुधीभिर्विभाव्यम्।

अशौचान्तदिने मलमासपाते तु मलमासानन्तरभाविदर्शे कृष्णैकादश्यां वा पतितश्राद्धं कर्तव्यम्। किन्तु द्वादशमासेऽधिमासपाते द्वादशमासविहितश्राद्ध-सपिण्डनानि त्ववश्यं कर्तव्यानि। शुद्धे त्रयोदशे मासि वार्षिकश्राद्धं पुनः कार्य्यमेव आब्दिकं प्रथमं यस्य प्रकुर्वीत मलीम्लुचे। त्रयोदशे तु सम्प्राप्ते कुर्वीत-पुनराब्दिकं इति व्यासोक्तेः। एवमपकृष्यसमिपण्डने च कृतेऽपि पूर्णेऽब्दे पुनराब्दिकं श्राद्धं कर्तव्यमेव। न च "पूर्णे संवत्सरे श्राद्धं षोड़शं परिकीर्तितम्। तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यते"॥ इति हेमाद्रिवचनात् पूर्णाब्दे क्रियमाणात् श्राद्धाद् यथोभयनिर्वाहस्तथा 'पूर्णसंवत्सरवृद्ध्यारम्भकालयो"स्तुल्यत्वेनापकर्ष-सपिण्डनेऽपि कृते उभयनिर्वाह इति वाच्यम्। हेमाद्रिवृतवचनस्य पूर्णेऽब्दे सपिण्डने कृते तद्दिने पुनराब्दिककरणशङ्कायां तेनैवाब्दिकं तन्त्रसिद्धमि"त्यभिप्रायकत्वात् गाभिलेन पूर्णेऽब्दे सपिण्डीकरणमभिधायातः ऊर्ध्वं संवत्सरे संवत्सरे प्रेतायान्नं दद्यात् यस्मिन्नहनि प्रेतः स्यादित्यब्दादूर्ध्वं सांवत्सरिकविधानाच्च। मृततिथौ श्राद्धाकरणे प्रत्यवायसम्भवान्मृततिथावश्यमेव श्राद्धं कर्तव्यमिति प्राचीनाः शिष्टाः। तेषां तथैव समुदाचारः इति संक्षेपः।

मलमासमृतानां तु श्राद्धं यत्प्रतिवत्सरम् ।

मलमासेऽपि कर्तव्यं नान्येषां तु कदाचन ॥३७२॥

( कालमाधवीय-धृत-पैठीनसिवचनम् )

एकोद्दिष्टानामपि अशौचादिना अमावास्यायां श्राद्धकरणेऽमावास्या-पार्वणेन एकोद्दिष्टं प्रसङ्गसिद्धम् । अन्योद्देश्येनानुष्ठितस्यान्यत्रोपकारसम्पादनं प्रसङ्गः । हविःस्वासादितेषु प्रकृतप्रयाजस्यानुष्ठानात् तिष्ठन्तं पशुं प्रयजतीति इत्यनन्तरं "काशौ "इतिपाठो दृश्यते हस्तलिखित पुस्तके । तश्चिन्तम् । काशौ कालभेदेऽपि प्रसङ्गवद् एकोद्दिष्ट-पार्वणयोः कालभेदेऽपि प्रसङ्गसिद्धेः । अथ प्रवासमृतस्य श्राद्धनिर्णयः ।

---

यदा मासो न विज्ञातो विज्ञातं दिनमेव तु ।

तदा ह्याषाढ़के मासि माघे वा तद्दिनं भवेत् ॥३७३॥ (बृहस्पतिः)

"आषाढ़के" इत्यत्र "मार्गशीर्षे" इति केचित् पठन्ति ।

न ज्ञायते मृताहश्चेत् प्रोषिते संस्थिते सति ।

मासश्चेत् प्रतिविज्ञातस्तद्दर्शे स्यान्मृताहनि ॥३७४॥ (बृहस्पतिः)

मृताहनीत्यत्र यत्कर्त्तव्यमिति शेषः । प्रोषित इत्यज्ञानकारणोपलक्षणम् ।

दिनमासौ न विज्ञातौ मरणस्य यदा पुनः ।

प्रस्थानदिनमासौ तु ग्राह्यौ पूर्वोक्तया दिशा ॥३७५॥ (बृहस्पतिः)

पूर्वोक्तया दिशेति मरणदिनमासाज्ञाने तयोरेकतराज्ञाने वा यथा व्यवस्थापितं तथाऽत्रापीत्यर्थः । तेन प्रस्थानदिनमासज्ञाने तद्ग्रहणम् । प्रस्थानमासमात्रज्ञाने तदीयामावास्या ग्राह्याः । प्रस्थानतिथिमात्रज्ञाने तु मार्गशीर्षमासादौ तत्तिथिर्ग्राह्या । प्रवासदिनमासयोरप्यज्ञाने मरणश्रवणदिने कुर्यात् । तत्रासम्भवे श्रवणमाससम्बन्धिनि दर्शे कुर्यात् । अविज्ञाते मृतेऽमावास्यायां श्रवणदिवसे वेति प्रचेतसः श्रवणात् । मृते मृताहनीत्यर्थः । श्रवणदिवसमवधारणकालोपलक्षणम् ।

एकोद्दिष्टकालनिर्णयः ।

पूर्वाह्णे वैदिकं कर्म अपराह्णे तु पार्वणम् ।
एकोद्दिष्टं तु मध्याह्णे प्रातर्वृद्धिनिमित्तकम् ॥३७६॥
मुहूर्तत्रितयः प्रातस्तावानेव तु सङ्गवः ।
मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णश्च तादृशः ।
सायाह्नस्त्रिमुहूर्तश्च सर्वकर्मसु गर्हितः ॥३७७॥

इतिपञ्चधाविभागः । प्रत्याब्दिकादौ व्यासेनोक्तम् "मध्याह्नश्च गन्धर्वकृतपरोहिणसंज्ञकः सप्तमाष्टमनवममुहूर्तात्मकः । ( भुजबलभीमे भोजदेवेनधृतं गौतमवचनम् । )

**प्रभा**

अथ प्रसङ्गात् तन्त्रप्रसङ्गौ निर्णीयेते । तत्रानेकमुद्दिश्य सकृत्प्रवृत्ति स्तन्त्रता । यथा पूर्वोक्तस्थले पूर्णसम्वत्सरे सपिण्डने तद्दिने न पुनराब्दिकाचरणं "तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यत" इति तन्त्रतासिद्धम् । यथा वा दर्शपौर्णमासयोराग्नेयादीनाम् । यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्याञ्चाच्युतो भवति, उपांशुयाजमन्तरा यजति, ताभ्यामग्नीषोमीयमेकादशकपालं पौर्णमास्यां प्रायच्छत्, ऐन्द्रं दधि अमावास्यायामैन्द्रं पयोऽमावास्यामिति कर्मस्वरूपज्ञापकरूपोत्पत्तिश्रुत्युक्तानां षण्णां प्रधानयागानां मध्ये आग्नेयाष्टकपालैन्द्रदधिपयोयागानां त्रयाणाम् आग्नेयाष्टाकपालोपांशुयागाग्निषोमीयैकादशकपालयागानां त्रयाणां सकृत्सकृदनुष्ठितेन प्रयाजाद्यङ्गेन प्रधानोपकारः सिध्यति । प्रयाजादयश्च "समिधो यजति" "तनूनपातं यजति" "इड़ो यजति" वर्हिर्यजति "स्वाहाकारं यजति" इत्येवं रूपाः पञ्च । तथा-नानाब्रह्मवधजन्यपापक्षयार्थं सर्वोद्देशेन सकृत्प्रायश्चित्ते कृते सर्वब्रह्मवधजन्यपापनाशः । गोवधे तु तन्त्रता नास्ति । तन्त्रताया हेतुश्च अदृष्टार्थकैकजातीयकर्मणः कालदेशकर्त्रादीनां प्रयोगानुबन्धवैधहेतुभूतानामभेदे उद्देश्यविशेषाग्रह इति श्रीरघुनन्दनभट्टाचार्यपादाः ।

प्रसङ्गश्चान्योद्देशेन प्रवृत्तावनस्यापि सिद्धिः । यथा पश्वर्थमनुष्ठितेन प्रयाजादिना पशुतन्त्रमध्यपातिनः पुरोडाशस्यापि उपकारसिद्धिः । यथा वा तप्ते पयसि दध्यानयति। सा वैश्वदेव्यामिक्षा भवति, वाजिभ्यो वाजिनमित्यत्रामिक्षार्थं प्रवृत्तौ अनुद्दिश्य वाजिनस्यापि सिद्धिः । आमिक्षामुद्दिश्य पुरुषस्य प्रवृत्तेरामिक्षा

आरभ्य कुतपे श्राद्धं कुर्य्यादारौहिणं बुधः।
विधिज्ञो विधिमास्थाय रोहिणं तु न लङ्घयेत् ॥ ३७८ ॥ (गौतमः)

इतिवचनात् कुतपरोहिणौ प्रशस्तौ। अतएव

मुहूर्तात् सप्तमादूर्ध्वं मुहूर्ताद्दशमादधः।
एकोद्दिष्टस्य कालोऽयमिति शास्त्रविनिश्चयः ॥ ३७९ ॥

अत्र षड्भेदाः—यदा पूर्वेद्युरेव मध्याह्नव्याप्तिस्तदा पूर्वदिने; यदा परेद्युरेव मध्याह्नव्याप्तिस्तदा परदिने श्राद्धम्। यदोभयदिने व्याप्तिर्मध्याह्न-स्पर्शाभावो वा तदा पूर्वदिन एव श्राद्धम्। अपराह्न-सायाह्नास्तमयव्याप्ति-विषयपित्र्यसामान्यवचनानुग्रहात्। उभयदिने साम्येनैकदेशव्याप्तौ,—

खर्वो दर्पश्च हिंसा च त्रिविधं तिथिलक्षणम्।
खर्वदर्पौ परौ कार्यौ हिंसा स्यात् पूर्वकालिकी ॥ ३८० ॥

इति वचनात् तिथेः साम्ये च वृद्धौ च परदिने, क्षये पूर्वदिने श्राद्धम्। वैषम्येनैकदेशव्याप्तौ यत्र महतीव्याप्तिस्तद्दिने श्राद्धम् ॥

## प्रभा

पुरुषं प्रयोजयति न तु वाजिनं, तस्य प्रसङ्गसिद्धत्वात्। आमिक्षा घनीभूतं पयः (छाना इति भाषा) शिष्टं जलं वाजिनम्। तथा "प्रकृते अमावास्यापार्वणेन एकोद्दिष्टं प्रसङ्गात् कालभेदेऽपि सिध्यतीति तात्पर्य्यम्। एवञ्च "तन्त्रप्रसङ्गयो-रनावृत्तेनैव कर्मणा नानादृष्टफलसिद्धौ लाघवमेव हेतुः। यत्र च गौरवे कृते फलान्तरमुत्पद्यते तत्र "फलमुखिगौरवस्यादोषत्वादि"त्युक्तिः सुतरां संङ्गच्छत इति भावः।

प्रवासमृतस्य श्राद्धकालनिर्णयः। "यदा मासो न विज्ञात" इत्यादिवचनं मृताह-प्रस्यानदिनमासयोरज्ञाने आषाढ़े माघे मार्गशीर्षे वा यथाकथञ्चिदेतेषां मासानां सामीप्यादिकं विचिन्त्य तत्तन्मासीयकृष्णैकादश्यां दर्शे वा पर्णनरदाह-विधिना दाहादिकं कृत्वा श्राद्धमाचरेदित्यर्थः। एतदसम्भवे स्मरणदिवसं वा मृततिथिः कल्पनीयः। श्रवणदिवसावधारणासामर्थ्ये श्रवणे मासि च तत्रैव कृष्णैकादश्यां दर्शे वा श्राद्धकाल इति।

पार्वणश्राद्धकालः। "अपराह्णे तु पार्वणम्" इत्यादिवचनापराह्णो मुख्यकालः। तत्पूर्वदिन एवापराह्णव्याप्तौ पूर्वदिने श्राद्धम्। परदिन एवापराह्णव्याप्तौ परदिने श्राद्धम्। उभयदिनेऽपराह्णव्याप्तौ—

अपराह्णद्वयव्यापिण्यतीतस्य तु या तिथिः।
क्षये पूर्वा तु कर्तव्या वृद्धौ कार्या तथोत्तरा ॥ ३८१ ॥ (वौधायनः)

इति व्यवस्था। अतीतस्य मृतस्य। तत्र ग्राह्यतिथेः क्षयेऽपराह्णद्वयव्यापित्वासम्भवादुत्तरतिथिगतवृद्धिक्षयाभ्यां निर्णयः।

तिथ्यादौ तु भवेद् यावान् ह्रासो वृद्धिः परेऽहनि।
तावान् ग्राह्यः स्वपूर्वेद्युरदृष्टोऽपि स्वकर्मणि ॥ ३८२ ॥ इति

तिथ्यादावित्यादिशब्देन नक्षत्रयोगौ गृह्येते। पूर्वतिथेर्यत्स्वकर्म तस्मिन् निमित्तीभूते सति तस्यां पूर्वतिथौ वृद्धिक्षयौ प्रक्षेपनोयावित्यर्थः। तथा सति परतिथेरपराह्णे यावान् क्षयस्तावान् पूर्वेद्युरेव योजनीयः। तथा सत्युत्तरविद्धा ग्राह्या तिथिर्नापराह्णव्यापिनी, पूर्वविद्धा तु तद्व्यापिनीति सैव ग्राह्या भवति। उत्तरतिथेः साम्ये तु खर्वदर्पवाक्यात् परदिने श्राद्धम्। यदा दिनद्वयेऽप्यपराह्णमस्पृष्टाऽवशिष्टं किञ्चित्कालं व्याप्नोति तदा पूर्वविद्धायां श्राद्धम्। परदिने कुतपव्याप्तिसत्त्वेऽपि पूर्वदिने तिथिमूलत्वास्तमयव्यापित्वरूपगुणद्वयसद्भावात्।

## प्रभा

एकोद्दिष्टश्राद्धकालः। स च प्रागेव निर्णीतोऽमावास्याश्राद्धकालादिनिर्णयप्रकरणे तथापि समासत उच्यते। तत्र सायाह्नमुहूर्तद्वय (अन्तिममुहूर्तं विहाय-नातिसन्ध्यासमीपत इत्यतिशब्दस्वरसात्) पर्युदस्तेतरकाल-कुतपादिमुहूर्तपञ्चक-रौहिण्यादिमुहूर्तचतुष्टयवासरतृतीयांशीयापराह्णमुहूर्तद्वयकालाः यथाक्रममापत्-सामान्य-प्रशस्त-प्रशस्ततमत्वेन ज्ञेया। इति यन्निर्णीतः कालः स पार्वणादिश्राद्ध-विषयः। पार्वणस्यापराह्णे विधानात्। एकोद्दिष्टस्य मध्याह्नकालकर्तव्यत्वेन सप्तममुहूर्तादूर्ध्वं दशममुहूर्तमध्ये कर्तव्यम्। तत्र कुतपरोहिण्यौ सर्वथा प्रशस्तौ ज्ञेयौ। मूलम् आरंभक्षणः इत्यर्थः।

प्रायः प्रातरुपोष्ये हि तिथिर्दैवफलेप्सुभिः ।
मूलं हि पितृतृप्त्यर्थं पित्र्यं चोक्तं महर्षिभिः ॥ ३८३ ॥
यस्यामस्तं रविर्याति पितरस्तामुपासते ।
सा पितृभ्यो यतो दत्ता ह्यपराह्णः स्वयम्भुवा ॥ ३८४ ॥
अह्नोऽस्तमनवेलायां कलामात्रापि या तिथिः ।
सैव प्रत्याब्दिके श्राद्धे नेतरा पुत्रहानिदा ॥ ३८५ ॥ इति
दर्शश्च पौर्णमासश्च पितुः साम्वत्सरं तथा ।
पूर्वाविद्धामकुर्वाणो नरकं प्रतिपद्यते ॥ ३८६ ॥

इति तादृशे विषये पूर्वविद्धायाः कर्तव्यता दर्शिता । यदा दिनद्वये वैषम्येनैकदेशव्याप्तिस्तदा यत्र दिने महती व्याप्तिस्तत्र श्राद्धम् ।

द्व्यपराह्णव्यापिनी चेदाब्दिकस्य यदा तिथिः ।
महती यत्र तद् विद्धां प्रशंसन्ति महर्षयः ॥ ३८७ ॥

इति साम्येनोभयदिनव्याप्तिश्चेत् तदा ग्राह्यतिथिगतवृद्धिक्षयसाम्यैः खर्वदर्पवाक्यात् पूर्ववद् व्यवस्थाऽवसेया । ईदृशे विषये माधवाचार्यकारिका—

कुतपाद्यपराह्णा तु व्याप्तिराब्दिक उत्तमा ।
तदभावेऽपराह्णस्य व्यापिका गृह्यतां तिथिः ॥ ३८८ ॥
क्षये पूर्वोत्तरावृद्धौ व्याप्तिश्चेदपराह्णयोः ।
न ग्राह्यतिथिगौ वृद्धिक्षयावूर्ध्वतिथेस्तुतौ ॥ ३८९ ॥

## प्रभा

पूर्वविद्धामकुर्वाण इति । "ययास्तं सविता याति पितरस्तामुपासते । तिथिं तेभ्योऽपराह्णो हि स्वयं दत्तः स्वयम्भूवेतिगृह्यपरिशिष्टधृतवृद्धमनु वचनेन सहापराह्णः पितृणामिति सामान्यतः श्रुतिवचनैकवाक्यत्वादिति भावः । एवमावास्येतरपार्वणश्राद्धं सांवत्सारिकं श्राद्धं पार्वणिभिरपराह्ण एव कार्यम् । तदसम्भवे पर्युदस्तेतरसायाह्नस्यादिममुहूर्तद्वये गौणकालेऽपि श्राद्धं कर्तव्यम् । तथा च मण्डनाचार्याः—"मुख्यकाले यदावश्यं कर्म कर्तुं न शक्यते । गौणकालेऽपि तत्कार्यं गौणेऽप्येतादृशो मतः" इति । एतादृशो मुख्यसदृशः । अत्र च गौणकालस्य ग्राह्यत्वं दर्शितं न तु पर्युदस्तकालस्येति ।

साम्ये तूर्ध्वतिथे ग्राह्या परविद्धैव वृद्धिवत् ।
न स्पृशत्यपराह्णं चेत् पूर्वा स्यात् कुतपो वृथा ॥ ३९० ॥
वैषमेनैकदेशस्य व्याप्तौ ग्राह्या महत्त्वतः ।
साम्येन चेत्क्षये पूर्वा परा स्याद्वृद्धिसाम्ययोः ॥
वृद्धिः साम्यक्षया ग्राह्या तिथिगा चापराह्णिकी ॥३९१॥

इति अमावास्याव्यतिरिक्त षाट् पुरुषिकपार्वणश्राद्धेऽप्येवमेव व्यवस्था । प्रत्याब्दिकश्राद्धस्योक्तकालेऽसम्भवे सायाह्नादिगौणकाले कर्तव्यम् ।

स्वकालातिक्रमे कुर्याद् रात्रेः पूर्वं यथाविधि ।
विधिज्ञः श्रद्धयोपेतः सम्यक् पात्रनियोजकः ॥
रात्रेरन्यत्र कुर्वाणो श्रेयः प्राप्नोत्यनुत्तमम् ॥३९२-३९३॥

इति वचनाभ्यां सायाह्नस्य गौणकालत्वात्सायाह्नेऽपि प्रत्यूहे श्राद्धं कार्यम् । आह्निकश्राद्धपरित्यागे प्रत्यवायबाहुल्यश्रवणात् । प्रातः सङ्गवयोस्तु श्राद्धं न कर्तव्यमिति माधवाचार्य्याः । प्रशस्ते पूर्वदिने यथोक्तकाले केनापि निमित्तेन श्राद्धासम्भवे "मुख्यतिथ्यन्तराये तु तिथिशेषेऽपि गृह्यतामिति न्यायेन परदिने श्राद्धकरणम् । अत्राप्यकरणे कृष्णैकादश्यमावास्यादौ कार्यम् । यथोक्तव्यवस्थया परदिने श्राद्धप्राप्तौ भाक्तादिना पूर्वदिने श्राद्धेष्वकृतेषु परदिने यथोक्तकाले श्राद्धकरणं न पुनः कृष्णैकादश्यादौ ; विघ्ने सति अत्राप्यनुष्ठानविधानात् ॥

एकभक्तादिविचारः । निरामिषं सकृद्भुक्त्वा सर्वभुक्तजने गृहे ।
असम्भवे परेद्युर्वा ब्राह्मणांस्तान् निमन्त्रयेत् ॥३९४॥
( देवलः )

इति । यद्यपि श्राद्धपूर्वदिने आमिषरहितसकृद्भोजनमेवोक्तं श्राद्धप्रकरणे तथाप्यन्यत्र श्वोभूते दैवपित्रो औपवस्त्व्यमश्नातीतिहारीतोक्तं हविष्यभोजनम् । औपवस्त्व्यं घृतभूयिष्ठं हविरितिनृसिंहवाजपेयिनः ॥

दन्तधावनविचारः । यद्यपि स्मृत्यन्तरे—

श्राद्धे जन्मदिने चैव विवाहे मुखदूषिते ।
व्रते चैवोपवासे च वर्जयेद् दन्तधावनम् ॥३९५॥

न भक्षयेद् दन्तकाष्ठमेकादश्यां नरेश्वर।
आदित्यदिवसे चैव तस्मादेनो महद्भवेत् ॥३९६॥

इति कर्माङ्गत्वेन दानहोमादिप्रतिषेधवत् श्राद्धाद्यङ्गत्वेन दन्तधावनं काष्ठकरणकं प्रतिषिध्यते ॥ इति विहितनिषेधविकल्पापत्तिभयेन सुखार्थदन्तधावनस्य निषेधकल्पना। अतएव,—

श्राद्धोपवासदिवसे खादित्वा दन्तधावनम्।
गायत्र्याः शतशः पूता अपः प्राश्य विशुध्यति ॥३९९॥

इति कर्माङ्गभ्रंशप्रायश्चित्तम्। एवञ्च भोजनोत्तरदन्तधावनस्यापि तत्र निषेधः। सुखार्थदन्तधावनस्य भोगत्वादेव निषेधः, सर्वभोगविवर्जित इति वचनात्।

## प्रभा

निरामिषमित्यनेन हविष्यभोजनं ग्राह्यमिति भावः। हविष्यान्नमाह तिथितत्त्वधृतास्मृतिः—"हैमन्तिकं सितास्विन्नं धान्यं मुद्गास्तिला यवाः। कलायकङ्गुनीवारा वास्तूकं हिलमोचिका ॥ यष्टिका कालशाकञ्च मूलकं केमुकेतरत्। लवणे सैन्धवसामुद्रे गव्ये च दधिसर्पिषी ॥ पयोऽनुद्धृतसारञ्च पनसाम्रहरीतकीः। तिन्तिड़ी जीरकञ्चैव नागरङ्गञ्च पिप्पली ॥ कदली लवली धात्री फलान्यगुड़मैक्षवम्। अतैलपक्वं मुनयो हविष्यान्नं विदुर्बुधाः" ॥ हैमन्तिकमित्यभिधायागस्त्यसंहितायां—"नारिकेलफलञ्चैव कदलीं लवलीं तथा। आम्रमामलकञ्चैव पनसञ्च हरीतकीम्। व्रतान्तरप्रशस्तञ्च हविष्यं मन्यते बुधैः" ॥

तत्र गोभिलः—'अथ श्राद्धमवावास्यायां पितृभ्यो दद्यादित्युपक्रम्य "तदहर्वा ब्राह्मणानामन्त्र्य पूर्वेद्युर्वाऽनिन्द्येनोपमन्त्रितो नातिक्रमेदामन्त्रितो वा नान्यदन्नं प्रतिगृह्णीयादित्यत्र ब्राह्मणानामन्त्र्येति यदभिहितं तत्र निमन्त्र्य श्राद्धं कुर्यात् पूर्वेद्युर्वा पूर्वदिने, परदिने वा निमन्त्रणं न त्वामन्त्रणं, "यत्र प्रत्याख्याने प्रत्यवायस्तन्निमन्त्रणं, यत्रकामचारस्तदामन्त्रणमिति "विधिनिमन्त्रणामन्त्रणाधीष्टेत्यादि पाणिनिसूत्रभाष्ये भेदेनोपादानात्। कामचारस्तु इच्छाविशेषः, प्रत्याख्याने चेदिच्छा तर्हि प्रत्याख्यानमप्रत्याख्याने चेदिच्छा तर्हि अप्रत्याख्यानं तत्र न प्रत्यवायः। अतएवानिन्द्येनोपामन्त्रितो नातिक्रमेदिति गोभिलोक्तिः सुतरां संगच्छते। अतश्च

नात्र पूर्वापरदिने निमन्त्रणस्थले प्रत्याख्याने प्रत्यवायादेव व्रीहियववदिच्छाविकल्पः। पूर्वदिनासामर्थ्ये परदिने "श्वः कर्तास्मीति निश्चित्य दाता विप्रान् निमन्त्रयेत्। किन्तु शक्ताशक्तभेदेन व्यवस्थित विकल्प निरामिषं सकृद्भुक्त्वा सर्वसुप्तजने गृहे। असम्भवे परेद्युर्वा ब्राह्मणांस्तान् निमन्त्रयेदिति देवलवचनात् पूर्वदिने कृतामन्त्रणो ब्राह्मणोऽवश्य योषित्प्रसङ्गादि परित्यजेत्। निश्चित्येति पदान्निश्चये निरामिषसकृद्भोजनादेरङ्गत्वम्। यद्यपि श्वो भाविकर्मणि प्रत्यूहसम्भवान्निश्चयोऽशक्यनिर्णयस्तथापि शास्त्रोक्तश्वः कर्तव्यत्वनिश्चयात्मकज्ञानमत्र विवक्षितम्। तादृग्ज्ञानाभावे तदङ्गरहितेनापि श्राद्धं कर्तव्यमिति। उत्कटकोटिकसम्भावनाया एवात्र निश्चयपदार्थत्वात्। उत्कटकोटिता च संशयोयविषयताविशेषः। संशये कोटिद्वयस्य तुल्यता सम्भावनायामेकस्या आधिक्यमिति विशेषः। श्राद्धदिने परिधानार्थं पूर्वदिने वस्त्रधावनक्षारादिकं श्राद्धस्थाने वेदिकालेपनादिकमपि कार्यम् वस्त्राशौचादिकं कार्यं श्वः कर्तास्मीति जानता। स्थानोपलेपनञ्चैव कृत्वा विप्रान् निमन्त्रयेत्॥ दन्तकाष्ठञ्च विसृजेद्व ब्रह्मचारी शुचिर्भवेत् इति वराहपुराणवचनात्। ब्रह्मचारी विशेषतस्त्यक्तक्रियानिवृत्तिरूपमैथुनः। "निमन्त्रयेत पूर्वेद्युः पूर्वोक्तान् द्विजसत्तमान्। अप्राप्तौ तद्दिने वापि हित्वा योषित्प्रसङ्गिनमिति मार्कण्डेयपुराणीयवचने प्रशब्दस्वरसात्। "योनिक्रियाविरोधाद्यैर्गुणैर्युक्तानलोलुपान्। प्रार्थयेत प्रदोषान्ते भुक्तान्नान् शयितान् द्विजान्। सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैर्भवितव्यं भवद्भिर्नः श्वोभूते श्राद्धकर्मणि॥ ते तं तथेत्यविघ्नेन याति चेद्व रजनीसुखम्। तथाश्रुतं प्रतीक्षेरन् श्राद्धकालमतन्द्रिताः॥" इत्यादियमवचने "योनिक्रियाविरोधाद्यै"रिति स्पष्टमुक्तत्वाच्च। एतच्च पार्वणप्रकृतित्वात् सर्वश्राद्धेऽनुवर्तते किन्तु आभ्युदयिके श्राद्धे "प्रातरामन्त्रितां विप्रान्" इति छन्दोपविशिष्टात् श्राद्धदिने प्रातरेवामन्त्रणं तत्र श्वःपदस्यासमवेतार्थत्वात्मन्त्रान्तरसत्त्वेनोहादेरन्याय्यत्वात् "अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः। भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा" इति मत्स्यपुराणीयमन्त्रः पठनीयः। दन्तकाष्ठञ्च विसृजेदिति विसृजेत् श्राद्धीयब्राह्मणेभ्यो दद्यादिति श्राद्धचिन्तामणिः। श्राद्धकर्तुश्च "श्राद्धे जन्मदिने चैव विवाहेऽजीर्णसम्भवे। व्रते चैवोपवासे च वर्जयेद्दन्तधावनमितिविष्णूक्तेर्दन्तधावननिषेधात्। किन्तु द्वादशगण्डूषजलेन मुखं परिशोध्य प्रातः स्नात्वा धौते वस्त्रे विभृयादिति स्मार्ताः। एतेन दन्तधावनादिकं व्याख्यातम्। श्राद्धदिने तैलाभ्यङ्गादिकं विशेषतस्तिलतैलाभ्यङ्गं न कार्यम्। वामपादमादौ प्रक्षाल्य दक्षिणपादप्रक्षालमपूर्वकं श्राद्धस्थाने गच्छेत्। प्रपञ्चस्त्वन्यत्र श्राद्धविवेक-श्राद्धतत्त्वादावनुसन्धेयः।

शूद्रादीनां मन्त्रपाठविचारः ।

अयमेव विधिः प्रोक्तः शूद्राणां मन्त्रवर्जितः ।
अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते ॥ ३९८ ॥ इति

•एकोद्दिष्टश्राद्धानन्तरं बराहपुराणोक्तम् "अमन्त्रस्य तु शूद्रस्य" इति परिभाषेयं तेन शूद्रकर्तृककर्मसु ब्राह्मणपठितवेदमन्त्रोऽदृष्टजनक इत्यर्थः । शूद्रमधिकृत्य—

नमस्कारेण मन्त्रेण पञ्चयज्ञान् न हापयेदिति ।
ब्रह्मक्षत्रविशामेव मन्त्रवत्स्नानमिष्यते ।
तूष्णीमेव हि शूद्रस्य सनमस्कारकं मतम् ॥ ३९९ ॥ इति

"अनुमतोऽस्य नमस्कारो मन्त्र" इति शूद्राधिकारे गौतमः । अत्र नमस्कारमन्त्रो "नमः" इति मन्त्र इति विज्ञानेश्वरः । अत्र निष्कर्षः—वैदिकमन्त्रपाठो निषिद्धः । पौराणिकमन्त्रस्तु पठनीय एव । वेदवर्जं शूद्रस्येति आचारचिन्तामणिधृतस्मृतेः । "मन्त्रवर्जं न दूष्यन्ति प्रशंसां प्राप्नुवन्ति चे"ति व्यासवाक्ये मन्त्रवर्जमिति वैदिकमन्त्रवर्जमिति कल्पतरुव्याख्यानात् ।

न हि वेदेष्वधिकारः क्वचिच्छूद्रस्य विद्यते ।
पुराणेष्वधिकारो हि दर्शितो ब्राह्मणैरिह ॥ ४०० ॥

इति मत्स्यपुराणवचनाच्च ।

अध्येतव्यं न चान्येन ब्राह्मणं क्षत्रियं विना ।
श्रोतव्यमेव शूद्रेण नाध्येतव्यं कथञ्चन ॥ ४०१ ॥

इति पुराणमधिकृत्य वचनं तु न हि वेदमन्त्रेतरपरं केवलं मन्त्र वर्जित इति ।

एवं शूद्रोऽपि सामान्यं वृद्धिश्राद्धञ्च सर्वदा ।
नमस्कारेण मन्त्रेण कुर्यादामान्नवद्बुधः ॥ ४०२ ॥ इति
मन्त्रवर्जं हि शूद्राणां द्वादशेऽह्नि सपिण्डनम् ॥ ४०३ ॥

इत्यादि नमस्कारेणेति तुष्णीमेव हि तद्विधानाच्छ्राद्धपञ्चयज्ञस्नानेषु पौराणिकमन्त्रोऽपि पठनीयः । एषु मन्त्रमात्रस्य नाकाङ्क्षितत्वाद्

ब्राह्मणेनाप्युभयविधमन्त्रो न पठनीयः। त्रैवर्णिकस्त्रीणामपि श्रौतेतरकर्मसु वेदमन्त्रनिषेधमाहनृसिंहतापनीये "सावित्रीं प्रणवं यजुर्लक्ष्मींस्त्रीशूद्रयोर्नेच्छन्ति, सवित्रीं लक्ष्मीं यजुः प्रणवं यदि स्त्री शूद्रो जानीयात्समृतोऽधोगच्छति। नेच्छन्तीति "नास्ति स्त्रीणां क्रिया मन्त्रै"रिति वचनमपि वैदिकमन्त्रपरं व्याख्येयम्। अतएव स्त्रीभिः सर्वत्र पौराणिकमन्त्रः पठ्यते॥

## प्रभा

शूद्रादीनां मन्त्रपाठविचारः। "वेदमन्त्रवर्जं शूद्रस्येतिच्छन्दोगाह्निकाचार-चिन्तामणिधृतस्मृतौ" वेदेति विशेषणात् वैदिकेतरमन्त्रपाठे शूद्रादेरधिकारः सूचितः। "शूद्रोऽप्येवं विधः कुर्य्याद् विना मन्त्रेण संस्कृतः। न केनचित् समसृजत् च्छन्दसा तं प्रजापतिरिति यमस्मृतौ छन्दसा वेदेनेत्युक्तेश्च। पौराणिकोऽपि मन्त्रोऽपि न पाठ्यः इति रघुनन्दनाशयः। भविष्यपुराणे पुराणमधिकृत्य "अध्येतव्यं न चान्येन ब्राह्मणं क्षत्रियं विना। श्रोतव्यमिह शूद्रेण नाध्येतव्यं कदाचन" इति मन्त्रेतरपुराणपरम्। अनुपनीतस्यापि शूद्रसमत्वेन श्राद्धातिरिक्तस्थले वेदपाठ-निषेधमाह मनुः—"नाभिव्याहारयेद् ब्रह्म स्वधानिनयादृते। शूद्रेण हि समस्तावद् यावद् वेदे न जायते"॥ उपनयनसंस्कारद्वारा द्विजातीनां वेदजन्मता। "सावित्रीं प्रणवमित्यादिनृसिंहतापनीयं तु" नेच्छन्तीति पर्यन्तं पराशरभाष्ये लिखितम्। वेदमन्त्रवर्जं शूद्रस्येति दर्शनात् पौराणिकमन्त्रपाठे सुतरां शूद्रादीनामधिकारो लभ्यते। पञ्चमहायज्ञस्नानादिषु विशेषतो नमस्काररूपमन्त्रविधानात्। साम्प्रदायिकास्तु वेदस्य मन्त्रब्राह्मणात्मकत्वेन "मन्त्रवर्जमि"त्यनेन मन्त्रवर्जने ब्राह्मणभागेऽधिकारो लभ्यते इति नाशङ्कनीयम् "वेदमन्त्रवर्जं शूद्रस्येति निषेधे वेदपदेन मन्त्रब्राह्मणात्मक-वेदवर्जनं, मन्त्रपदेन वैदिकपौराणिकोभयात्मकमन्त्रवर्जनमित्यर्थकत्वात् शूद्रादीनां पौराणिकमन्त्रपाठोऽपि निषिद्धः, "अध्येतव्यं न चान्येन ब्राह्मणं क्षत्रियं विना। श्रोतव्यमिह शूद्रेण नाध्येतव्यं कदाचनेति वचनादित्याहुः। लक्ष्मीं श्रीबीजमित्यर्थः।

केचित्तु "ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्। यः प्रयाति त्यजन् देहं स याति परमां गतिम्"॥ (गीता ८।१३) इति गीतास्मृतिवचनप्रामाण्यात् यत्पदेन सामान्यतः सर्वेषामेवोच्चारयितॄणां ग्रहणाच्छूद्रादीनामपि प्रणवोच्चारणेऽधिकारोस्तीति प्रलपन्ति, तत् प्रलपनमुन्मत्तप्रलपनमेव। पूर्वश्लोके सर्वानीन्द्रियद्वाराणि संयम्य विषयवासनाविमुक्तं मनो हृदि निरुध्य भ्रूवोर्मध्ये प्राणमास्थित आत्मना योगधारणा-

श्राद्धक्रमः । शुचिदेशं परीक्ष्याशुगोमयेनोपलेपयेत् ।

अगारेषु विविक्तेषु तीर्थेषु च नदीषु च ॥ ४०४ ॥ (यमः)
विविक्तेषु च देशेषु तृप्यन्ति पितरस्तदा ।
पारक्ये भूमिभागे च पितृणां निर्वपेत्तु यः ॥
तद्भूमिस्वामिपितृभिः श्राद्धकर्म विहन्यते ॥ ४०५ ॥ (यमः)
तस्माच्छ्राद्धानि देयानि पुण्येष्वायतनेषु च ।
नदीतीरेषु तीर्थेषु स्वभूमौ च प्रयत्नतः ॥ ४०६ ॥ (यमः)
परकीये गृहे यस्तु स्वान् पितॄन् तर्पयेज्जड़ः ॥
तद्भूमिस्वामिनस्तस्य हरन्ति पितरो बलात् ॥
अग्रभागं ततस्तेभ्यो दद्यान्मूल्यञ्च जीवताम् ॥४०७॥ (ब्रह्मपुराणम्)

अग्रभागोऽत्र श्राद्धीयद्रव्यस्य । तद्भूमिस्वामिपितृभ्यस्तद्-भूमिस्वामिभ्यो जीवद्भ्यः किञ्चिद्द्रव्यमानतिकरणं दद्यात् । मूल्यदानाग्रभागदानयोः प्रत्येकं हरणनिवर्तकत्वेन वैकल्पिकत्वम् । श्राद्धविघातनिमित्तकत्वेन तदङ्गत्वात् ।

अटव्यः पर्वताः पुण्या नद्यस्तीर्थानि यानि च ।
सर्वाण्यस्वामिकान्याहुर्न हि तेषु परिग्रहः ॥ ४०८ ॥ (यमः)

पुण्याः पुण्यप्रदेशाः क्षेत्रानीति यावत् । एषु स्वगृहवद्भूस्वामिभ्यो न देयम् ।

**प्रभा**

माश्रित्य ओमित्येकाक्षरं ब्रह्म समुच्चरन् प्रतिमादिवत् प्रतीकत्वादिवद्वा ब्रह्म-वाचकमोमित्येकाक्षरं ब्रह्मस्वरूपं ध्यायन् देहं प्रकर्षेणार्च्चिरादिमार्गेण त्यजति तस्यैव प्रक्रान्तयत्पदवाच्यत्वात् "तस्मादोमित्युदाहृत्य यज्ञदानतपः क्रियाः । प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्" ॥ (गीता १७।२४) इति तत्रैव "ब्रह्मवादिना-मितिसुस्पष्टनिर्देशाच्च । यदि कश्चित् प्राक्तनकर्मभोगाय शूद्रयोनिमापन्नः प्राक्तनक्षये ब्रह्मवादी स्यात् तेन तावज्जन्मान्तरं ग्रहनीयं नास्मिन् देहे नास्मिन् जन्मनि वेति कादाचित्कविषयत्वान्न विचारविषय इति सर्वमवदातम् । अलौकिके धर्मेऽधर्मे वार्थे शास्त्रमात्रस्यैव प्रमाणत्वात् "यः शास्त्रविधिमुत्सृज्य वर्तते कामचारतः । न स सिद्धिमवाप्नोति न सुखं न परां गतिम्" ॥ (गीता १६।२३-२४) इत्यादिना शास्त्र-विधिमुलङ्घ्य कर्म समाचरतां नास्ति सिद्धिर्नवा सुखादिकमित्यप्यवधेयम् ।

द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा ।
भोजयेत् सुसमृद्धोऽपि न प्रसज्जेत विस्तरे ॥४१०॥
( मनु अः ३।१२५ श्लोः )

सत्क्रियां देशकालौ च शौचं ब्राह्मणः सम्पदः ।
पञ्चैतान् विस्तरो हन्ति तस्मान्नेहेत विस्तरे ॥४११॥
( मनुः ३।१२६ )

ब्राह्मणैश्च सहाश्नन्ति पितरो ह्यन्तरीक्षगाः ।
वायुभूता न दृश्यन्ते भुक्त्वा यान्ति परां गतिम् ॥४१२॥
पूर्वमेतत् परीक्ष्येत ब्राह्मणान् वेदपारगान् ।
शरीरप्रभवैर्दोषैर्विशुद्धांश्चरितव्रतान् ॥ ४१३ ॥
दूरादेव परीक्षेत ब्राह्मणान् वेदपारगान् ।
इष्टान् वा यदि वाऽनिष्टांस्तांस्तु तत्कालमानयेत् ॥ ४१४ ॥

पूर्वं निमन्त्रणादिति शेषः । दूरात्परीक्ष्य पितृपितामहाद्यन्तर्जलपरीक्षा ।

### प्रभा

श्राद्धक्रमदेशादिविचारः । शुचिदेशमित्यादि । तत्र यमः "रुक्षं कृमियुतं क्लिन्नं सङ्कीर्णानिष्टगन्धकं । देशं त्वनिष्टशब्दञ्च वर्जयेत् श्राद्धकर्मणि । रुक्षं धूलियुतं । क्लिन्नं पङ्किलं । सङ्कीर्णं स्वल्पं स्थानं । अनिष्टगन्धकम् असुरभिगन्धं । अनिष्टशब्दं प्रतिकूलं जावनिकादिशब्दवन्तं । विष्णुरपि "न म्लेच्छविषये श्राद्धं कुर्यान्न गच्छे"दिति । म्लेच्छदेशश्च "चातुर्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते । तं म्लेच्छदेशं जानीयादार्यावर्तमतः पर"मिति रघुनन्दनधृतवचनात् "कृष्णसारस्तु-चरति मृगो यत्र स्वभावतः । स ज्ञेयो यज्ञियो देशो म्लेच्छदशस्ततः परमि"ति (२।२३) मनुवचनाच्च । तथा च शङ्खलिखितौ "नेष्टकारचिते स्थाने पितॄन् सन्तर्पयेदिति" । तेन पाषाणमये तु न दोष इति । सन्तर्पयेदिति । तर्पणं तृप्त्यनुकूल-व्यापारः, स च श्राद्धादिरिति काशीरामवाचस्पतयः । वायुपुराणे—"त्रिशङ्को-र्वर्जयेद्देशं सर्वं द्वादशयोजनं । उत्तरेण महानद्या दक्षिणेन तु कीकटात् ॥ देशस्त्रै-शङ्कवो नाम श्राद्धकर्मणि गर्हितः । पारस्कराः कलिङ्गाश्च सिन्धोरुत्तरकूलतः । प्रणष्टाश्रमधर्माश्च देशा वर्ज्याः प्रयत्नतः ॥ कीकटो मगधः । तस्मादेतानि निन्दित-स्थानानि परित्यज्य शुचौ देशे गोमयेनोपलिप्तायां भूमौ श्राद्धं कर्तव्यमिति प्रतीयते ।

मुण्डान् जटिलकाषायान् श्राद्धे यत्नेन वर्जयेत् ।

न श्राद्धे भोजयेन्मित्रं धनैः कार्य्योऽस्य संग्रहः ॥

नारिं न मित्रं यं विद्यात् तं श्राद्धे भोजयेद्द्विजम् ॥ ४१५ ॥

मुण्डान् लूनशिखान् । आपस्तम्बः—भोजयेद्ब्राह्मणान् ब्रह्मविदो योनिगोत्रमन्त्रान्तेवास्यसम्बन्धान् गुणहान्या तु परेषां समुदितः सोदर्योऽपि भोजयितव्यः" । समुदितः समस्तगुणयुक्तः, एतेनान्तेवासिनो व्याख्याताः । "शिष्यांश्चैके सगोत्रांश्च भोजयेदूर्ध्वं त्रिभिर्गुणव्रतः" । त्रिभ्यः पुरुषेभ्य ऊर्ध्वं सगोत्रानित्यर्थः । वशिष्ठः शिष्यानपि गुणवतो भोजयेदिति

## प्रभा

तत्रापि स्वकीयभूमौ न परकीयायां भूमौ परौकीय गृहे वा "परकीयगृहे यस्तु स्वान् पितॄंस्तर्पयेज्जडः । तद्भूमिस्वामिनस्तस्य हरन्ति पितरो बलादि"ति ब्रह्मपुराण-वचनात् । तमेवार्थं विशिनष्टि "पारक्ये भूमिभागे" त्वित्याद्विना ।

वैकल्पिकमिति । "स्मृतिशास्त्रे विकल्पास्तु आकाङ्क्षापूरणे सती"तिभविष्य-पुराणवचनात् । ततश्च श्राद्धविघातनिवर्तकत्वेन तदङ्गत्वात् पितृरीत्या भूस्वामिपितृभ्यः प्रथमतो देयम् । अस्वामिकभूमौ स्वभूमो च न देयमिति । अस्वामिकानि तु कानीत्याकाङ्क्षायामाह "अटव्या इत्यादिः । क्षेत्रादीनीति अटव्यो नैमिषाद्याः, पर्वता हिमालयाद्याः, नद्योगङ्गाद्याः. तोर्थानि पुरुषोत्तमादिक्षेत्राणि, वाराणस्याद्यायतनानि च । स्वाम्यभावे हेतुश्च तेषु यथेष्टदानविक्रयादिविनियोग-लक्षणः परिग्रहः । श्राद्धे प्रशस्तदेशश्च देवलः 'श्राद्धस्य पूजितो देशो गया गङ्गा सरस्वती । कुरुक्षेत्रं प्रयागश्च नैमिषं पुष्कराणि च । नदीतटेषु तीर्थेषु शैलेषु पुलिनेषु च । विविक्तेषु च तुष्यन्ति दत्तेनेह पितामहाः । श्राद्धेऽपराह्णतिलादीनां प्राशस्त्यमाह मनुः "अपराह्णस्तिला दर्भा वास्तुसम्पादनं तथा । स्पष्टिः सृष्टिर्द्विजा-श्चाग्र्याः श्राद्धकर्मसु सम्पदः । दर्भाः पवित्रं पूर्वाह्णे हविष्याणि च सर्वशः । पवित्रं पञ्च पूर्वोक्तं विज्ञेया हव्यसम्पदः ॥ वास्तुसम्पादनं दक्षिणाश्रयणत्वाद्य" पलेपादि-करणम् । स्पष्टिः अकार्पण्येन अन्नव्यञ्जनसम्पादनम् । सृष्टिः अन्नादेः स्वादुत्व-सम्पादनम् । प्रथमपवित्रपदं मन्त्रपरम् । द्वितीयं शुच्याचारादिपरम् । हव्यमत्र वैदिकं कर्म । नीलकण्ठकृष्णसारादेरपि प्राशस्त्यं कालसारादावनुसन्धेयम् ।

एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः ।
अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः ॥४१६॥ ( मनु ३।१४७ )
मातामहं मातुलञ्च स्वस्रीयं श्वशुरंगुरुम् ।
दौहित्रं विट्पतिं बन्धुं ऋत्विग्-याज्यौ च भोजयेत् ॥४१७॥
( ममु ३।१४८ )

एतेषामुक्तगुणहीनानामप्यनुकल्पत्वम् ।

परीक्ष्य श्राद्धं दातव्यमित्येवं वैदिकीश्रुतिः ।
परीक्षणाच्चरम्भेद आर्जवं गुणवत्तरम् ॥ ४१८ ॥
अपरीक्ष्य तु यो दद्याच्छ्राद्धमार्जवमास्थितः ।
तस्य तुष्यन्ति पितरो देवताश्च न संशयः ॥ ४१९ ॥
ब्राह्मणानामसंपत्तौ कृत्वा दर्भमयान् द्विजान् ।
श्राद्धं कृत्वा विधानेन पश्चाद्विप्रेषु दापयेत् ॥ ४२० ॥
( श्राद्धसूत्रभाष्यकारसमुद्रकरधृतवचनम् )

निधाय दर्भविष्टरानासनेषु समाहितः ।
प्रैष्यानुप्रैष्यसंयुक्तं विधानं प्रतिपादयेत् ॥४२१॥
( श्राद्धविवेकधृतवचनम् )

शालग्रामशिलायां च यः श्राद्धं कुरुते द्विजः ।
गयायास्त्रिगुणं पुण्यं लभतेऽसौ न संशयः ॥ ४२२ ॥

इति शालग्रामशिलाब्राह्मणपक्षे मांसानि देयानि । सन्न्यासि-ब्रह्मचारिणोरेव मांसभक्षणनिषेधात् । तद्ब्राह्मणकश्राद्धे तददानमुचितम् ।

## प्रभा

श्राद्धे वर्ज्यान्याह—मुण्डानित्यादि । तथा च मनुः "चण्डालश्च वराहश्च कुक्कुटश्च तथैव च । रजस्वलाश्च षण्डश्च नेक्षेरन्नश्नतो द्विजान् । घ्राणेन शूकरो हन्ति पक्षवातेन कुक्कुटः । श्वा तु दृष्टिप्रदानेन स्पर्शेनावरजस्तथा । वर्ज्येषु यमः कुक्कुटः पक्षवातेन हन्ति श्राद्धमसंवृतम् । घ्राणेन विड्वराहश्च वायसश्च रुतेन तु । श्वा तु दृष्टिनिपातेन मार्जारः श्रवणेन तु ॥ छायया हन्ति वै षण्डः स्पर्शेन तु रजस्वला ॥ देवलोऽपि हीनाङ्गः "पतितः कुण्ठी व्रनी पुक्वसनास्तिकौ । वीभत्सुमशुचिं नग्नं मत्तं

न च शालग्रामशिलाचक्रस्य भक्षणप्रसङ्गोऽस्ति न वा। विष्णवे मत्स्या न देया इति प्रतिभाति। पितर एव देवताः। शालग्रामशिलाब्राह्मणस्तु आहवनीयवदेव प्रतिपत्तिस्थानम्। न तु देवता, तस्मात् तत्रापि मांसानि-देयानि। अनिन्द्येनामन्त्रणोनोपक्रमेत्। नामन्त्रणे वान्यदर्थं प्रतिगृह्णीयात्।

## प्रभा

धूर्तं रजस्वलाम्। नीलकाषायवसनं छिन्नकर्णं तु वर्जयेत्। इत्यादीन्यन्युसन्धेयानि। ग्रन्थगौरवभयाद्द विरम्यते।

श्राद्धे ब्राह्मणविचारः—

"ब्राह्मणानामसंपत्तौ कृत्वा दर्भमयान् द्विजान्" इत्यादि वचनप्रामाण्यादिदानीं सर्वत्र श्राद्धे दर्भमयब्राह्मणं प्रतिनिधिं कृत्वा श्राद्धकृत्यं सम्पाद्यते शिष्टैरिति दृश्यते। तत्समीचीनं नवेति विचिन्त्यते। यद्यपि पूर्वकालीनब्राह्मणवदाधुनिकब्राह्मणा न शौचाचारसम्पन्नास्तथापि तैरेव प्रतिनिधीभूतैर्दैवकृत्यादिकं सर्वं यथा सम्पाद्यते श्राद्धेषु तेषां साक्षाद्द ब्राह्मणरूपेण श्राद्धीयान्नग्रहणे का वाधा? 'सम्वन्धिनस्तथा सर्वान् दौहित्रं विट्पतिं तथा। भागिनेयं विशेषेण तथा बन्धून् गृहाधिपान्॥" इत्यादिवचनजातेन श्राद्धीयब्राह्मणनिर्वाचनसमये न "तपःस्वाध्यायादिगुणसम्पन्नान्" कदाचिदप्युक्तं सुतरामेतेषां बन्धूनां यः कोऽपि श्राद्धीयब्राह्मणो भवितुमर्हति। अपि च "यस्त्वासन्नमतिक्रम्य ब्राह्मणं पतितादृते। दूरस्थं भोजयेन्मूढो गुणाढ्यं नरकं व्रजेत्"॥ इत्यादिवचनेन तत् सुस्पष्टमेव निकटतमसम्बन्धयुक्तान् श्राद्धीयपितृदेवतां प्रति श्रद्धासम्पन्नान् ब्राह्मणानेव श्राद्धीयब्राह्मणान् विदध्यात्। तथा च "युगे युगे च ये द्विजास्तत्र ते नावमन्तव्याः" इत्यादिना च तत्तत्कालीनब्राह्मणेष्वपि सम्मानं प्रदर्शितम्। न वशिष्ठादिवत् पुरोहिता अधुना समुपलभ्यन्ते इति किं सर्वे दैवं पैत्रं वा कर्म परित्यजेयुः? अतएव 'पतितादृते' इति वचनस्वारस्यात् पतितब्राह्मणं विहाय कालोचितशौचाचारसम्पन्नाः ब्राह्मणाः श्राद्धीयब्राह्मणं भवितुमर्हन्तीति समीचीनं प्रतिभाति। तेन च तासु तासु ब्राह्मणमूर्तिषु समधिकभक्तिश्रद्धादिप्रदर्शनद्वारा समाजकल्याणमपि संसाधितं स्यादिति सुधीभिर्विभाव्यम्। स्फुटीभविष्यति चैदमुपरिष्टान्मूलग्रन्थस्थवचनजातादिति दिक्।

अथ शालग्रामशिलाब्राह्मणकश्राद्धमाह—शालग्रामशिलायामिति। "शालग्राम-शिलाग्रे तु यच्छ्राद्धं क्रियते नृभिः। तस्य ब्रह्मान्तिकं स्थानं तृप्ताश्च पितरो दिवी"ति लिङ्गपुराणवचनात् शालग्रामब्राह्मणपक्षे श्राद्धकाले एव सुतरामामन्त्रणं न

केचित्तु— यथान्यायं नियोज्यस्तु ब्राह्मणो हव्यकव्ययोः ।
कथञ्चिन्नाप्यतिक्रमेत् पापः शूकरतां व्रजेत् ॥ ४२३ ॥
ब्राह्मणं तु मुखं कृत्वा देवताः पितृभिः सह ।
तदर्थं समुपाश्नन्ति तस्मात् तन्न व्यतिक्रमेत् ॥ ४२४ ॥
केतनं कारयित्वा तु योऽतिपातयते द्विजः ।
ब्रह्महत्यामवाप्नोति शूद्रयोनौ तु जायते ॥ ४२५ ॥
आमन्त्रितस्तु यः श्राद्धे अन्यस्य कुरुते क्षणम् ।
सम्वत्सरकृतं पुण्यं तस्य नश्यति दुर्मतेः ॥ ४२६ ॥
आमन्त्र्य ब्राह्मणं यस्तु यथान्यायं न पूजयेत् ।
अतिकृच्छ्रासु घोरासु तिर्यग्योनिषु जायते ॥ ४२७ ॥

अन्यस्य कुरुते क्षणम् अन्यस्यामन्त्रणं स्वीकरोतीत्यर्थः ।
आमन्त्रितश्चिरं नैव कुर्याद् विप्रः कदाचन ।

## प्रभा

तत्पूर्वेद्यु स्तस्य नियमाद्यभावादिति कालसारः । वाजपेयिबृद्धाः केचन शालग्रामशिला-ब्राह्मणश्राद्धमिदानीमपि कुर्वन्ति । विश्वेदेवास्थाने द्वे पितृस्थाने तिस्रः शिलाः स्थापयन्ति च । न तु मासान् ददतीति व्यवहारः ।

केचिद्द वैष्णवा दर्भमय-ब्राह्मणेऽपि विष्णोर्निवेदितान्नेन श्राद्धं कुर्वन्ति । तत्र पण्डितसर्वस्वे विचारः "पितृपाकोन दातव्यो यावत् पिण्डान् न निर्वपेत्" । पिण्डनिर्वपणात् पूर्वं पितृपाको न देय इत्यर्थः । न ण्वास्यामपि व्यवस्थायां विष्णोर्निवेदनं कदा कार्यं,तस्मात् पूर्वं परं पाकभेदेन वेति । नाद्यःपितृपाको नदातव्य इति पित्रधिकारोक्तेः, न द्वितीयः,"पितृशेषं तु यो दद्याद्धरये परमात्मने । रेतोदाः पितरस्तस्य भवन्ति क्लेशभागिनः"इति दोषश्रवणात् । नापि तृतीयः,असम्भवात् । "भुञ्जीत पितृसेवितमित्यस्य शेषान्नभक्षणे कार्येऽनिवेदितभक्षणे दोषश्रवणादिति चेद्द विचार्यते । आद्यपक्षद्वयं मन्याय्यं, तृतीये पक्षे तु हर्यर्थं पृथक्पाको न कार्यः किन्तु पक्वान्नं द्विधा कृत्वाऽर्द्धं परिस्थाप्योर्ध्वं पितृभ्यो दद्यात् । एवं सति न विरोधः, पितृपाको न दातव्यं इति विरोधश्चेन्न ब्राह्मण निमन्त्रणात् पूर्वं द्विधा कृत्वा इत्याशयात् । अथवा प्रथमं हरिपूजा कार्या, "हरेर्निवेदितं सम्यग् देवेभ्यो जुहुयाद्धविः । पितृभ्यश्चापि तद्द दद्यात् तदानन्त्याय कल्प्यते" इति वचनात् । इति शब्दो गणेशादीनामुपलक्षणमिति । अतएव श्रीपुरुषोत्तमक्षेत्रे महाप्रसादेन पितृश्राद्धं कुर्वन्ति शिष्टाः ।

देवतानां पितृणाञ्च दातुरन्यस्य चैव हि ।
चिरकारी भवेद् रोगी पच्यते नरकाग्निना ॥ ४२८ ॥

चिरकारी विलम्बकारीत्यर्थः । 'धर्मेण वित्तमादाय पितृभ्यो दद्यादिति-शङ्खलिखितौ ।

सम्वत्सरं तु गव्येन पयसा पायसेन वा ।
वार्द्धीनसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥ ४२९ ॥ (मनुः ३।२७१)
त्रिपिवं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् ।
वार्द्धीनसं तु तं प्राहुर्याज्ञिकाः पितृकर्मणि ॥ ४३० ॥

( कुल्लुकभट्टधृतनिगमवचनम् )

उदकपानसमये मुखं कर्णद्वयञ्च यस्योदकमध्ये पतति स त्रिपिवः ।

कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहङ्गमः ।
स वै वार्द्धीनसः प्रोक्त इत्येषा नैगमो स्मृतिः ॥४३१॥

कालशाकं महाशल्कं खड्गं गोधानिकं मधु ।
आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्वशः ॥४३२॥

( मनुः ३।२७२ )

यत्किञ्चिन्मधुसंयुक्तं तदानन्त्याय कल्पते ।
घृतेन भोजयेद् विप्रान् घृतं भूमौ समुत्सृजेत् ॥४३३॥

तथा घृतेन पात्रं पूरणीयम् ॥ यथा भूमौ घृतं क्षरतीत्यर्थः ।

## प्रभा

सम्वत्सरं तु गव्येनेत्यादि । अत्र केन द्रव्येण कियत्कालं तृप्तिर्भवतीति स्पष्ट-मुक्तं मनुना तृतीयाध्याये "हविर्यच्चिररात्राय यच्चानन्त्याय कल्पते । पितृभ्यो विधिवद्दत्तं तत्प्रवक्ष्याम्यशेषतः" ( २६६ । ) इति प्रतिज्ञाय "तिलैर्व्रीहियवैर्माषैरद्भि-र्मूलफलेन वा । दत्तेन मासं प्रीयन्ते विधिवत् पितरो नृणाम् ॥ २६७ ॥ द्वौ मासौ मत्स्य-मांसेन त्रीन् मासान् हारिणेन तु । औरभ्रेणाथ चतुरः शाकुनेनाथ पञ्च वै ॥ २६८ ॥ षण्मासान् शाश ( छाग ) मांसेन पार्षतेनाथ सप्त तु । अष्टावेणस्य मांसेन रौरवेण नवैव तु ॥ २६९ ॥ दशमासांस्तु तृप्यन्ति वराहमहिषामिषैः ॥ शशकूर्मयोस्तु

सर्वकामैः स यजते यस्तिलैर्यजते पितॄन् ।
वर्धमानं तिलं श्राद्धमक्षयं मनुरब्रवीत् ॥ ४३४ ॥

वर्धमानतिलं तिलबहुलम् ।

आम्रान् पारेवतानिक्षून् मृद्वीकाभव्यदाड़िमान् ।
विदार्यांश्च भरन्तांश्च श्राद्धकालेऽपि दापयेत् ॥ ४३५ ॥
लाजान् मधुयुतान् दद्यात् सक्तून् शर्करया सह ।
दद्याच्छ्राद्धे प्रयत्नेन शृङ्गाटविशकेतुकान् ॥४३६॥

पारेवतं जम्भीराकारफलं काश्मीरदेशे प्रसिद्धम् । मृद्वीका द्राक्षा । भव्यः स्कमरङ्ग इति लक्ष्मीधरः । उ आ उ इति प्रसिद्धफलवाचकाश्च । अविरोधात्सामाचाराच्चोभयमपि ग्राह्यम् । विदार्याश्च जलप्रभवाः कन्दविशेषाः भरन्तो जलप्रभवः कन्दविशेष इति मञ्जिरकारः । केबुकं जलप्रभवः कन्दविशेषः ।

कृष्णा माषास्तिलाश्चैव श्रेष्ठाः स्युर्यवशालयः ।
महायवा व्रीहियवास्तथैव च मधुलिकाः ॥
कृष्णाः श्वेता लोहिताश्च ग्राह्याः स्युः श्राद्धकर्मणि ॥ ४३७ ॥
विल्वामलकमृद्वीका पनसाम्रातदाड़िमम् ।
भव्यपारेवताक्षोड़ं खर्जुराम्रफलानि च ॥ ४३८ ॥

## प्रभा

मांसेन मासानेकादशैव तु ॥ १७० ॥ एतश्च "संवत्सरं तु गव्येणेत्याद्युक्तम् । वार्ध्रीनसलक्षणमाह— त्रिपिवमित्यादि । "नद्यादौ पयः पिवतो यस्य त्रीणि जलं स्पृशन्ति, कर्णौ जिह्वा च त्रिभिः पिवतीति त्रिपिवः" इति कुल्लकभट्टः । कालेति कालशाकाख्यं शाकम् । महाशल्काः सशल्का इति मेधातिथिः । "रोहिताकारा इति केचित् । मत्स्यविशेषा इति युज्यते । महाशल्किनो मत्स्या" इति यमवचनादिति कुल्लुकभट्टः । गोधानिकमि"त्यत्र "लोहामिषं मधु" इतिपाठः कुल्लुकसम्मतः । व्याख्यातञ्च तेन लोहो लोहितबर्णश्छाग एव छागेन सर्वलोहेनानन्त्यमिति पैठीनसिवचनात् । मुन्यन्नानि नीवारादीनि आरण्यानि सर्वानीति कुल्लकः । इत्येवमन्यत्र विस्तरः । ग्रन्थगौरवभिया नालोच्यतेऽधुनातनयुगे प्रयोजनविरहाच्च ।

काशरुको विदार्यश्च तालकन्दं तथाविधम्।
तमालुं शतकन्दश्च मध्यालुं शीतकन्दकम् ॥ ४३९ ॥
कालेयं कालशाकञ्च सुनिषन्नं सुवर्च्चला।
मांसं शाकं दधि क्षीरं चेञ्चुर्वेत्राङ्कुरस्तथा ॥ ४४० ॥
कट्फलं कङ्कनी द्राक्षा लकुचं मोचमेव च।
कर्कन्दुश्चावकं वारं तिन्दुकं मधुसाह्वयम् ॥ ४४१ ॥
वैकङ्कतं नारीकेलं शृङ्गाटक-कटीफलम्।
पिप्पली मरिचं चैव पटोलं वृहतीफलम् ॥ ४४२ ॥ (वायुपुराणे)
सुगन्धिमत्स्यमांसञ्च कलायाः सर्व एव च।
एवमादीनि चान्यानि स्वादूनि मधुराणि च
नागरं चात्र वै देयं दीर्घमूलकमेव च ॥ ४४३ ॥ (वायुपुराणे)

महायवा वेणुयवाः, मधुलिका धान्यविशेषः, योनालभेदो देवाधन्यमिति गौड़ाः। अस्यैव विशेषणं कृष्णाः श्वेता लोहिताश्चेति। आक्षोड़ं काश्मीरप्रसिद्धफलम्। कोविदारः श्वेतकाञ्चनारसदृशः। तालकन्दः तालमूलीति प्रसिद्धम्। श्वेतवन्दं शतावरी। शीतकन्दं शालुकम्। कालेयं तिक्तशाकविशेषः। कालाख्यं शाकं करालाख्यानिति गोविन्दराजः। सुनिषन्नं गङ्गेरीसदृशं जलप्रभवं शाकम्। सुवर्च्चला सूर्यभक्तशाकम्। सूर्यावर्ता इति गौड़ाः। चेञ्चुः चञ्चु इति प्रसिद्धं शाकम्। मण्डशाकमिति गौड़ाः। कट्फलं कटकलवृक्षफलमेव। कङ्कली द्राक्षा अम्लरसा द्राक्षा। मोचः कदलीफलम्। कर्कन्दुः वदरीविशेषः। नागरं शुण्ठी। शुण्ठी आद्रकप्रकृतिकत्वादार्द्रकस्यापि देयत्वम्। नागरङ्ग इति पाठः शुद्धः। "नागरङ्गं चाम्लरसं न वा" विशेषत उपात्तमिति तदनादेयमेव।

मधुकं रामठं चैव कर्पूरं मरीचं गुड़म्।
श्राद्धकर्मणि शस्तानि सैन्धवं त्रपुषं तथा ॥४४४॥ (वायुपुराणे)

रामठं हिङ्गुम्। त्रपुषं सुखासिकापरनामिका कर्कटी।

यवव्रीही सगोधूमौ तिला मुद्गाः ससर्षपाः।
पियङ्गवः कोविदारा निष्पावाश्चात्र शोभनाः ॥४४५॥

निष्पवाः सिम्बीसदृशा दक्षिणापथप्रसिद्धाः। वर्ज्यानि "पलङ्का-नालिका-पोतिका-शिग्रु-सूमुक-वार्ताकु-भूस्तृणकाक्षलु-मासमसूरकृतलवणानि च श्राद्धे न दद्यात्।" नालिका हुलपोति मगधादौ प्रसिद्धः शाकविशेषः। सूमुकं वोजपूरम्। भूस्तृणं रामकर्पूरम्। काक्षलु जलप्रभवशाकम्। "भूस्तृण-काक्षलुकौ ग्राम्यारण्यौ शाकविशेषौ काश्मोरप्रसिद्धाविति हारोतभाष्यकारः। माषनिषेधोऽत्र गौरमासपरः। कृष्णमाषाणां देयत्वेनोक्तत्वात्। "पिप्पली-समकभूस्तृणाऽऽसुरीसर्षपः। "सुरस-कुष्माण्डालावुवार्ताकीपालङ्क्या तण्डुलीयक-कसुम्भपिण्डमूलकमहिषी क्षीराणि वर्जयेत्। राजमाषमसूरपर्युषितकृत-लवणानि च। आसुरी सर्षपो राजसर्षपः। सुरसं तुलसीशाकम्।

पिप्पली मरीचं चैव तथा वै पिण्डमूलकम्।
कृतञ्च लवणं सर्वं वंशाग्रञ्च विवर्जयेत् ॥४४६॥ (शङ्खः)

राजमाषान् मसूरांश्च कोद्रवान् कोरदूषकान्।
लोहितान् वृक्षनिर्यासान् श्राद्धकर्मणि वर्जयेत् ॥४४७॥ (शङ्खः)

वंशाग्रं वंशकरीरम्। कोरदूषको वनकोद्रवः। राजमाषो व्युङ्ङ्ग इति गौड़ाः। अत्र पिण्डमूलकं वर्तुलमूलकं ह्रस्वमूलकमिति यावत्। दीर्घमूलकं तु वायुपुराणे" दोर्घमूलकमेव चेति देयमित्युक्तम्।

## प्रभा

उक्तानामभावे "फलमूलैरद्भिरि"ति कात्यायनसूत्रे आपोमूलफलानि चेत्यापस्त-म्वोक्त्या अद्भिर्मूलफलेन चेति मनूक्त्या च निषिद्धेतरस्वादुमधुरमूलफलमात्रस्य सामान्यतो विहितत्वादालुप्रभृतीनां दानसमाचार इति गदाधरः। कृतं लवणं क्षारमृत्तिकादिभिः कृत्रिमम्, अतएव मनुनापि हविष्यान्ने अक्षारलवणं विहितमिति रघुनन्दनः।

ये तु पिण्डसारु इयि प्रसिद्धमूलं पिण्डमूलकमिति वदन्ति; ये वा पिण्डमूलकशब्देन शूरणनिषेधमाहुस्तदुभयमपि निरस्तम्ः। तदुभयत्र ह्रस्व-मूलकमिति दीर्घपदोपादनं कृतमिति।

अश्राद्धेयानि धान्यानि कोद्रवाः पुलकास्तथा।
हिङ्गुद्रव्येषु सर्वेषु अलाबुलसुनं तथा ॥४४८॥

द्रव्येषु मध्ये हिङ्गु श्राद्धे न देयमित्यर्थः। अयञ्च निषेधः स्वरूपेण दीयमानस्य। यत्तु मधुकं रामठं चैत्यादित्यपुराणे विधानं तद् द्रव्यान्तर-संस्कारकत्वेन। एवं मरीचादावपि। 'फलं तालतरूणाञ्च भुक्त्वा नरकमिच्छतीति वचनात् तालफलं निषिद्धम्। यद्यपि आर्द्रकस्य न शब्दोपादनं तथापि नागरस्यार्द्रकप्रकृतित्वात् नागरशब्देन शुण्ठ्यार्द्रकयोर्ग्रहणम्। अत्र चाद्भिर्मूलफलेन चेति। अलाभे मूलफलैरद्भिर्वेति "आपोमूलं फलानि चेति मनुकात्यायनापस्तम्बैः सामान्यतो मूलफलमात्रयोरुपादानाद्। यत्र साक्षान्निषेधस्तन्मात्रं विहाय सर्वमेव फलं मूलञ्च स्वादु मधुरञ्च विशेषेण दद्यात्। विशिष्योपादानात्त्व फलमूलविशेषार्थमिति तात्पर्यं बोध्यम्।

ततोऽन्नं बहुसंस्कारं नैकव्यञ्जनभक्ष्यवत्।
चोष्यपेयसमृद्धञ्च यथावदुपपादयेदिति ॥४४९॥

अत्र सामान्यतो विहितस्याभ्यवहरनीयद्रव्यस्य यथालाभमुपकल्पितस्य श्राद्धस्वरूपसम्पादकत्वं तदलाभे तु अविहिताप्रतिषिद्धं विहितसदृश-मुपादातव्यम्।

यत्तु श्राद्धप्रकरण एव निषिद्धं तत्प्रतिनिधित्वेनापि नोपादेयम्। यत्र तु फलविशेषसंयोगस्तस्य श्राद्धस्वरूपसम्पादकत्वे सति तत्तत्फलविशेषनिष्पादन-कत्वमपि। यत्र तु न फलविशेषसंयोगस्तेषां नित्यवदङ्गत्वात् तैर्विना श्राद्धाङ्गनिष्पत्तिरेव। निषिद्धं महिषमांसादि फलविशेषार्थं विहितं तत्फलार्धं नैवोपादेयम्। न श्राद्धस्वरूपसम्पादकत्वेन।

यत्तु तस्मिन्नेव द्रव्ये पितृतृप्तिकालाल्पीयस्त्वं भूयस्त्वञ्च तत्तस्यैव द्रव्यस्यावस्थाविशेषापेक्षया बोद्धव्यम्।

शस्त्रं कालायसं सीसं मलिनाम्बरवाससम् ।
अन्नं पर्युषितं चापि श्राद्धेषु परिवर्जयेत् ॥४५०॥
अपुमानपविद्धाश्च कुक्कुटो ग्रामशूकरः ।
श्वा चैव हन्ति श्राद्धानि दर्शनादेव सर्वशः ॥४५१॥
श्वविट्शूकरसंस्पृष्टं दीर्घरोगिभिरेव च ।
पतितैर्मलिनैश्चैव न द्रष्टव्यं कदाचन ॥
अन्नं पश्येयुरेते यत् तन्न स्यात् हव्यकव्ययोः ॥४५२॥

उत्स्रष्टव्यं प्रधानार्थं संस्कारश्चापविस्मृतः ।
हविषां संस्कृतानां तु पूर्वमेव हि मार्जनम् ॥ ४५३ ॥
मृत्संयुक्ताभिरद्भिस्तु प्रोक्षणं तु विधीयते ।
सिद्धार्थकैः कृष्णतिलैः कार्यञ्चैवावकीरणम् ।
गुरुसूर्याग्निवस्त्राणां दर्शनं वापि यत्नतः ॥ ४५४ ॥

प्रधानार्थं श्राद्धार्थमुत्स्रष्टव्यं श्राद्धे तन्न वियोज्यम् । असम्भवे तु मृत्संयुक्ताभिरद्भिः सम्मार्जनादिव छागदर्शनपर्यन्तं संस्कारं कृत्वा विनियोज्यमिति समुदायार्थः । पैठीनसि "तिलदौहित्रकुतपा इति पवित्राणि श्राद्धे सत्यं चाक्रोधं शौचं चात्वराञ्च प्रशंसन्ति" । विष्णुः "कुतप-कृष्णाजिन-तिल-सिद्धार्थकाक्षतानि पवित्राणि रक्षोघ्नानि च दद्यात्" । वायुपुराणे—

कृष्णाजिनस्य सान्निध्यं दर्शनं दानमेव च ।
रक्षोघ्नं ब्रह्मवर्चस्यं पशून् पुत्रांश्च दापयेत् ॥ ४५५ ॥

हारीतः— दर्भैरद्भिस्तिलैर्दत्तं तूष्णीमप्याश्नुते दिवम् ।
विधिना त्वानुपूर्व्येण अक्षयं परिकल्प्यते ॥ ४५६ ॥

## प्रभा

हिङ्गुश्राद्धे न देयमित्यर्थः । अयञ्च निषेधः स्वरूपेन दीयमानस्येति । स्वरूपेण द्रव्यान्तरासमभिव्याहारेण । हिङ्गुप्रभृतेः साक्षाद्वर्जनेऽपि "एवमादीनि चास्यानि स्वादूनि मधुराणि चेति" पूर्वोक्तवचनेन स्वादूनामेव देयता उक्ता, हिङ्गुप्रभृतेश्च स्वरूपेणास्वादुत्वाददेयता बोध्येति काशीरामः ।

नित्यवदङ्गत्वादिति । श्राद्धनिष्पत्तिस्तुनिषेधेतरद्रव्यदानादिना सम्भवति । द्रव्यभूम्ना कलातिशय्यं सम्पद्यते । फलभूयस्त्वसम्पादकद्रव्याभावेऽपि दरिद्रैः क्रियमाणं यथासादितद्रव्यैः श्राद्धस्वरूपनिर्वाहात् । तेन च नित्यस्यश्राद्धस्य सम्पादनेन प्रत्यवायाऽसम्भवादिति संक्षेपः ।

काञ्चनादिषु दर्भाद्यैर्मन्त्रवत् प्रतिपादिताः ।
पितॄणामक्षयं यान्त्यमृतं भूत्वा महोर्मिभिः ॥ ४५७ ॥

तूष्णीं श्राद्धमन्त्रवर्जितम् । इयञ्च दर्भादीनां विध्यानुपूर्वादिसहितानां-स्तुतिः । काञ्चनादिषु पात्रेष्विति शेषः । प्रतिपादिता आप इति शेषः ।

उशनाः— कुशा दर्भाः समाख्याताः कुतपा वृषयस्तथा ।
दुहितुश्चैव ये पुत्रास्ते दौहित्राः प्रकीर्तिताः ॥ ४५८ ॥

वृषिस्तृणमयं वर्तुलमासनं । शातातपः,—

दौहित्रं खङ्गमित्याहुर्ललाटाद् यद्धि जायते ।
तस्य शृङ्गस्य यत्पात्रं दौहित्रमपि तद्विदुः ॥ ४५९ ॥
दिवसस्याष्टमे भागे मन्दोभवति भास्करः ।
स कालः कुतपो नाम पितॄणां दत्तमक्षयम् ॥ ४६० ॥

पैठीनसिः— कुतोऽपि श्राद्धवेलायां श्रोत्रियो यदि दृश्यते ।
श्राद्धं पुनाति वै तस्मात् कुतपस्तेन संज्ञितः ॥ ४६१ ॥

अत्र च दौहित्रकुतपयोरनेकार्थत्वादेकतमोपादानेऽपि श्राद्धसमृद्धिर्भवतीति ॥

## प्रभा

अत्र रघुनन्दनेन "अत्र च हिङ्गमरिचशुण्ठीपिप्पलीनां स्वरूपेणादेयता द्रव्यान्तर-संस्कारकत्वेन देयता पूर्ववचनसिद्धेति श्राद्धतत्त्वेऽभिहितम् । ततोऽन्नं बहुसंस्कार-मित्यादि । अत्र विष्णुः—कुष्माण्डालाबुवार्ताकी ग्राम्यमाहिषदुग्धकम् । पालङ्कीं राजिकां श्राद्धे द्विःस्विन्नञ्च विवर्जयेदिति । द्विःस्विन्नमन्नमपि त्याज्यमिति "कृष्ण-मासास्तिलाश्चैव श्रेष्ठाः स्युर्यवशालयः" इति वायुपुराणवचने शालिर्हैमन्तिकं धान्यं तत्प्रभवतण्डुलादिग्राह्यं "हैमन्तिकं सितास्विन्नमिति हविष्यागणमध्योक्तेः । तदप्यन्नं "अन्नं पर्युसितं भावदुष्टं सहृल्लेखं पुनः सिद्धमाममृजीषपक्वं काममन्तर्दध्ना घृतेन वाभिघारितमुपभुञ्जीतेति वशिष्ठवचने पुनःसिद्धं द्विःस्विन्नापरपर्यायम् । आमं तण्डुलादि पर्युषितादि ऋजीषपक्वान्तं निषिद्धमपि कामं दध्ना घृतेन वाभिघारित-मुपभुञ्जीतेत्यनेन भोज्यान्तरासम्भव एव भुञ्जीतेति नैयतकालिककल्पतरुणा व्याख्यातं । तत्रामं तण्डुलादि ; "शस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते । आमं वितुषमित्युक्तं स्विन्नमन्नमुदाहृतमि"ति वशिष्ठवचनात् । स्विन्नास्विन्नतण्डुलयोर्यथा-

संख्यमन्नत्वेनामत्वेन च परिभाषितत्वात् पूर्वसूत्रे अन्नामपदाभ्यां तथैव प्रतीतेः। अतएव शूद्रादिभिः श्राद्धे आमान्नं प्रदीयते "आमं शूद्रस्य पक्वान्नं पक्वमुच्छिष्ट-मुच्यते ॥" इति वचनात्। विष्णुवचने वार्ताकीपदं श्वेतवार्ताकीपरं" कुविन्दां श्वेतवार्ताकं कुष्माण्डञ्च न भक्षयेदिति देवलवचनैकवाक्यत्वात्। द्विस्विन्नञ्च तदेव यत्सूपकारशास्त्रोक्तापेक्षितपाकनिष्पत्त्यनन्तरं शैत्यादिनिवृत्तये पुनः पच्यते। नत्वर्धपाकानन्तरं तच्छास्त्रोक्तसम्भारणरूपपाकान्तरसिद्धं द्विदलव्यञ्जनादि। स्विन्नमित्यत्रातीतार्थकनिष्ठाप्रत्ययेन तथैव प्रतीतेः। अतएवार्धसिद्धं द्विदलादि सम्भारणप्रचनानन्तरं पुनः पच्यते तिलादिभृष्टमनन्तरं गुड़ादिपक्वमोदकादि-शिष्टैर्दीयते भुज्यते च। अन्यथा द्विःसिन्नस्य तस्य भोज्यत्वं न स्यात्। अतएव च तण्डुलं कथमपि द्विःस्विन्नं न व्यवह्रियते। "पर्युषितं पुनः सिद्धमभोज्यमन्यत्र हिरण्णोदकस्पर्शादिति सुमन्तूक्तेः। पर्युषितं दिनान्तरपक्वमिति "यातयामं (व्यतीत-प्रहरं) गतरसं (निष्पीड़ितसारं शुष्कमित्यर्थः) पूति (दुर्गन्धयुक्तं) पर्युषितं दिनान्तरपक्वम्) च यत्। उच्छिष्टं (अन्यभोक्तावशिष्टं) चामेध्यं (कलञ्जादिकं) भोजनं तामसप्रियम् ॥ (गीता १४।१०) श्लोकटीकायां श्रीधरस्वामिवचनात्। श्राद्धेऽपि तामसं भोज्यं न देयमिति भावः। "तिलैः श्राद्धं पुष्टिकामः कुर्यात् पूपैर्ऋद्धिकामो घृतगुड़तैलैस्तेजस्कामः सौभाग्यकाम आरोग्यकामो वा परमान्न-कृषर-मांस-दधि-यवागूभिः सर्वकाम" इति हारीतेन फलकथनादेतेषां काम्याभिलापं विनापि पितृतृप्त्यतिशयजनकश्राद्धसम्पादकत्वेन फलविशेषजनकत्वं बोध्यम्। एतेषां तिलादीनां गुणफलत्वेन उत्पत्तिविधिसमभिव्याहृतनियतनिमित्तत्वाभावान्नाभि-लापवाक्ये समुल्लेखः। "घृतसम्भवे (घृतं देयं) तदसम्भवे तैलपाकमित्यापस्तम्बेन तैलपाकविधानात्। तैलञ्च तिलोद्भवं ग्राह्यम्। "तैलं प्रतिनिधिं कुर्याद् यज्ञार्थे याज्ञिको यदि। प्रकृत्यैव तदा होता ब्रूयाद् घृतवतीमिति" तिथितत्त्वधृत-यज्ञपार्श्ववचनदर्शनात् तिलोद्भवतैलस्यैव प्राशस्त्यम्। अधुना सार्षपादि-तैलदानमपि नैकान्ततो विरुद्धम् "पटोलं सर्षपं तथेति" वचने तद्विधानात्। "राजिका" राइसरिषा इति तु निषिद्धमेव। अतएव कूर्मपुराणे 'कन्दुपक्वानि तैलेन पायसं दधिसक्तवः। द्विजैरेतानि भोज्यानि शूद्रगेहकृतान्यपि"। कन्दुपक्वं जलोपसेकं विना केवलपात्रे यद्वह्निना पक्वं भृष्टतण्डुलादि। पाकसंस्कृतं दुग्धं न तु तण्डुलमिश्रितं। परमान्नं तु पायस इत्यमरसिंहेन पंलिङ्गनिर्देशात्। अत्र तु परमान्नमिति क्लीवेन निर्देशः। अतएव च "गोकुले कन्दुशालायां तैलयन्त्रेक्षु-यन्त्रयोः। अमीमांस्यानि शौचानि स्त्रीषु बालातुरेषु च"ति शातातपवचने

दर्भैर्मन्त्रैस्तिलैर्हेम्ना रजतेन विना जलम् ।
दत्तं हरन्ति रक्षांसि तस्माद् दद्यान्न केवलम् ॥४६२॥
अर्घ्यदाने च संकल्पे पिण्डदाने तथाक्षये ।
गोत्रसम्वन्धनामानि यथावत्प्रतिपादयेत् ॥४६३॥

सर्वत्र नामपदं विशेष्यं, गोत्रपदं सम्वन्धपदं च विशेषणम् ; विशेषणस्य पूर्वपाठः सिद्ध एव । नागृहीतविशेषणा विशिष्टे बुद्धिरिति न्यायात् ।

गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्मणि ।
गोत्रस्तु तर्पणे प्रोक्तः कर्ता चैवं न मुह्यति ॥४६४॥ ( गोभिलः )
सर्वत्रैव पितः प्रोक्तः पिता तर्पणकर्मणि ।
पितुरक्षय्यकाले तु अक्षयां तृप्तिमिच्छता ॥४६५॥
शर्मन्नर्घ्यादिके कार्यं शर्मा तर्पणकर्मणि ।
शर्मणोऽक्षय्यकालेऽपि पितॄणां दत्तमक्षयम् ॥४६६॥

कौत्ससगोत्र इत्यादौ कौत्साः सगोत्राः समानसन्ततयो यस्य स कौत्ससगोत्र इति पितृविशेषणम् । एवमाद्यपुरुषस्य कुत्सस्यापि कौत्ससमानसन्ततित्वात् कौत्ससगोत्रत्वम् । सन्ततिर्गोत्रजननमित्यमरः । सन्ततिरनवच्छिन्नपुत्र-पौत्रादिप्रवाहः । स च धर्मरूपः ।

अर्घ्येऽक्षय्योदके चैव अन्नदानेऽवनेजने ।
मन्त्रस्य विनिवृत्तिः स्यात् स्वधावाचनकर्मणि ॥४६७॥ इति ।
श्वेतचन्दन-कर्पूर-कुसुमानि शुभानि च ।
विलेपनार्थं दद्यात्तु यच्चान्यत् पितृवल्लभम् ॥४६८॥

## प्रभा

अमीमांस्यानि शौचाशौचभागितया न विचारणीयानीति भवदेवभट्टरत्नाकरादीनां व्याख्यानं सुतरां संगच्छते । "शर्कराः क्षीरसंयुक्ताः पृथुकानित्यमक्षयाः । शक्तून् लाजांस्तथा पूपान् कल्माषान् (यावकान्) व्यञ्जनैः सह । सर्पिः स्निग्धानि सर्वाणि दध्ना सत्कृत्य भोजयेत् । श्राद्धेष्वेतानि यो दद्यात् पितरः प्रीणयन्ति तम् ॥ इति वायुपुराणवचनाच्छ्राद्धे देयान्यतानीति । पृथुकः स्याच्चिपिटकमित्यमरः । अक्षयाः अक्षयफलजनकाः ।

पितृवल्लभं रजतादि ; जीवतां वा पितृणां यदभिलसितम्। "यदिष्टं जीवतश्चासीत् तच्च दद्यात्प्रयत्नतः"। इति शङ्खवचनात्। तथाच विष्णुः,—चन्दनकर्पूरकुङ्कुमागुरुपद्म-काष्ठान्यनुलेपनानीति।

ब्राह्मे— शुक्लाः सुमनसः श्रेष्ठास्तथा पद्मोत्पलानि च।
गन्धरूपोपपन्नानि यानि चान्यानि कृत्स्नशः ॥४६९॥
जवादिकुसुमं भाण्डीरुषिका च कुरुण्टकाः।
पुष्पानि वर्जनीयानि श्राद्धकर्मणि नित्यशः ॥४७०॥

जवादीत्यादिशब्दादेवं रक्तकुसुमम्। रुषिका अर्ककुसुमम्। कुरुण्टकाः पीतझिण्टीति।

प्रभा

नागृहीतविशेषणेति। विशिष्टबुद्धेर्विशेष्यविशेषणसम्बन्धविषयकत्वादगृहीतविशेषणाबुद्धिर्नविशिष्टबुद्धिं जनयति। अतएव गोत्रसम्बन्धनामानि यथावत् प्रदेयानि। प्रयोगकाले अमुकगोत्रपितरमुकदेवशर्मन् इत्यादिकमुल्लेख्यमित्यर्थः। विशेषणस्येति। उद्देश्यभागे गृहीतस्य विशेषणस्य पूर्वं पाठः। सम्बन्धश्च पित्रादिः। तथाच पारस्करप्रचेतसौ "गोत्रसम्बन्धनामानि पितॄणां परिकल्पयन्"। "शर्मन्नित्यनेन गोत्रसम्बधनामानीत्येकवाक्यतया शर्मान्तं नाम प्रतीयते। एतच्च ब्राह्मणानां "शर्मा देवश्च विप्रस्य वर्मा त्राता च भुभुजः। भूतिर्दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेदिति यमवचनात्। अत्र चकारेण देवशर्मणोः समुच्चयः। "तथाच ब्राह्मणस्य नामान्ते शर्मपदप्रयोगो देवपदप्रयोगो वेति विकल्प" इति गदाधरः। "एवं शर्मन्नित्यनेन शर्मान्तनाम्नो विशेष्यस्य विशेषणत्वात् पितर इति विशेषणवत् गोत्रस्य विशेषणस्यापि स्वम्बुद्ध्यन्तत्वं सरान्तमित्यनेन भङ्ग्यन्तरेणाभिहितम्। एवं सम्बुद्ध्यन्तत्वाद्युक्तं गोत्रपदं कर्ता उच्चारयिता न मुह्यतीत्यनेन श्राद्धादौ गोत्रपदमेवोच्चार्यमिति रघुनन्दनः। "न तु पितृदयिताकल्पतरुश्राद्धविवेकोक्तं गोत्रपर्य्यायकमपि सगोत्रमि"ति यद्रघुनन्दनेनोक्तं तत्कौत्साः सगोत्राः समानसन्ततयो यस्य स कौत्ससगोत्र इति पितृविशेषणम्" इतिमूलग्रन्थविरोधात्। अत्र सन्ततिर्गोत्र जननकुलानीति" पर्यायपाठात्, सा च विशेषरहितेति विशेषलाभाय तदादिभूतपुरुषेण कुशिकादिना ऋषिणावच्छिन्नो गोत्रशब्दार्थः। यद्यप्यनादिसंसारे सृष्ट्याद्यभावपक्षे अनादिपुरुषासम्भवस्तथापि कौशिकस्य ये पित्रादयः पूर्वे, ये च

वर्जयेदित्यनुवृत्तौ विष्णुः "उग्रगन्धान्यगन्धानि कण्टकिजातानि रक्तपुष्पानि च सितानि सुगन्धीनि कण्टकिजातान्यपि। जलजानि रक्तान्यपि दद्यात्।

श्राद्धे जात्यः प्रशस्ताः स्युर्मल्लिकाः श्वेतपुष्पिकाः।
जलोद्भवानि सर्वाणि कुसुमानि च चम्पकम्॥ ४७१॥
तुलसीगन्धमाघ्राय पितरस्तुष्टमानसाः।
प्रयान्ति गरुडारूढ़ास्तत्पदं चक्रपाणिनः।
श्राद्धे च तुलसीदानात् पितॄणां तृप्तिरक्षया॥ ४७२॥

यत्र—"जातीदर्शनमात्रेण निराशाः पितरो गताः" इति वाक्यस्य प्रामाण्येऽपि "शुक्लाः सुमनसः श्रेष्ठा इति सामान्यतः "श्राद्धे जात्यः प्रशस्ताः स्युरिति विशेषतश्च विधानान्निषेधः पीतजातीविषयः। विष्णुः मधुघृत-संयुक्तं गुग्गुलं दद्यात्। ब्राह्मे चन्दनागुरुणी चोभे तथैवोशीरपद्मकम्।

## प्रभा

तत्पुत्रादयोऽर्वाञ्चः ते सर्वे कौशिकेन गोत्रान्तरेभ्यो व्यावृत्ताः कौशिकोपलक्षित-पुरुषपौत्रपरम्परात्वेन गोत्रशब्दाभिधेयाः। एवञ्च गोत्रशब्दस्य परम्परारूपधर्म-वाचित्वात् तद्धर्मविशिष्टव्यक्तिलाभाय सगोत्र इति। तेनावच्छेदकपुरुषसमानः पुत्रपौत्रपरम्पराक इत्येव विशेषणविशेष्यभावात् कौशिकसगोत्र इत्यादिनिर्देशो युक्तः "पराशरसगोत्रस्य वृद्धस्य सुमहात्मनः" इति महाभारते निर्देशात् "सगोत्रां मातुरप्येके", "असगोत्रा च या पितुः" इति मन्वादिस्मृतिनिर्देशाच्च" इति कालसारोक्तिश्चादरनीया। ब्राह्मणानां स्त्रीनाम्नो देव्यन्तत्वं 'तथा क्षत्रियाणा-ममुकीवर्मा अमुकीराज्ञीति वैश्यानामकीगुप्ताऽमुकीदत्ती, शूद्राणामुकी दासीति प्रयोगः। यच्च "ब्राह्मणस्य देवशर्मा" इति यत् प्रयोगो दृश्यते तत्र देवपदस्य देवतुल्यत्वप्रति-पादकत्वेन लौकिकसंज्ञात्वमिति न कश्चिद्विरोधः। अतएव ब्राह्मणस्य नामान्ते शर्मांप्रयोगो देवपदप्रयोगो वेति विकल्प इति कालसारोक्तिः तदपि न समीचीनं रघुनन्दोक्तः समुच्चयपक्ष एव श्रेयान् "शर्मान्तं ब्राह्मणस्य स्यात्" इति शातातप-वचनेऽन्यत्र च शर्मान्तत्वदर्शनात् कुत्रापि देवान्तत्वमपि च "देवपूर्वं नराख्यं च शर्मवर्मादिसंयुक्तमिति" विष्णुपुराणवचनाच्च ब्राह्मणानां देवशर्मप्रयोगस्य समीचीनत्वं प्रतिभातीति संक्षेपः।

तुरुस्कं गुग्गुलं चैव घृताक्तं युगपद् दहेत् ।
घृतं न केवलं दद्याद् युष्टं वा तृणगुग्गुलम् ॥ ४७३ ॥

तुरुष्कं सिह्लकरसः । तृणगुग्गुलं गुग्गुलभेदः ।

शङ्खः— घृतेन दीपो दातव्यस्तिलतैलेन वा पुनः ।
वसामेदोद्भवं दीपं प्रयत्नेन विवर्जयेत् ॥ ४७४ ॥

वायुपुराणे—वस्त्राभावे क्रिया नास्ति-यज्ञा वेदास्तपांसि च ।
तस्माद् वस्त्राणि देयाणि श्राद्धकाले विशेषतः ॥ ४७५ ॥
विभवे इति रघुनन्दनधृतपाठः ।

ब्राह्मे— अनङ्गलग्नं यद्वस्त्रं वितरेत् तद्युगं शुभम् ॥ ४७६ ॥

वायुपुराणे—लोके श्रेष्ठतमं सर्वमात्मनश्चापि यत्प्रियम् ।
सर्वं पितृणां दातव्यं तदेवाक्षयमिच्छता ॥ ४७७ ॥
जाम्वुनदमयं दिव्यं विमानं सूर्य्यसन्निभम् ।
दिव्याप्सरोभिः सम्पूर्णमन्नदो लभतेऽक्षयम् ॥ ४७८ ॥

### प्रभा

रक्तपुष्पानीदि । जलोद्भवानि देयानि रक्तान्यपि बिशेषतः "इतिशङ्खवचनाज्जलजानि रक्तान्यपि दद्यादिति" । "दद्यादित्युपक्रम्याह,—"केतकी करवीरञ्च बकुलं चम्पकं तथा ।" जातिदर्शनमात्रेण निराशाः पितरो गताः ॥ जातीति रक्तजातिविषयं । करवीरे रक्तेऽप्यनिषिद्धे" इति रघुनन्दनः । आहतमिति । आहतमत्र पारिभाषिकमेव "ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् । आहतं तद्विजानीयात् सर्वकर्मसु पावनम् ॥ "यच्चान्यत् पितृवल्लभमिति । रजतादि जोवतां वा यदभिलषितमासीत् श्राद्धाप्रतिषिद्धं तदपि देयमित्याह वायुपुराणे "लोकेश्रेष्ठतममिति एतत् सर्वं काम्यं केवलफलश्रवणात् । गन्धाद्यभावे प्रतिनिधिमाह पैठीनसिः । काण्डमूलपत्रपुष्पफलप्ररोहरसगन्धादीनां सादृश्येन प्रतिनिधिं कुर्य्यात् सर्वाभावे यवः प्रतिनिधिर्भवतीति । काण्डं नालं प्ररोहोऽङ्कुरं सर्वाभावे यव इति कल्पतरुः । अत्र अवयव इति नारायणोपाध्यायाः । वस्त्रयुग्माभावे खण्डवस्त्रं देयम् । "रजतं रजताक्तं वा पितृणां पात्रमुच्यते इति तत्र हारीतः—काञ्चनेन तु पात्रेण राजतौडुम्वरेण वा । दत्तमक्षयतां याति खड्गेनार्घ्यकृतेन च । आर्घ्यकृतं त्रैवर्णिककृतम् अन्यदपि पात्रमभिमतमिति कल्पतरुः । अन्यत् कदलीत्वगपीति रघुनन्दनः ।

आच्छादनं तु यो दद्यादाहतं श्राद्धकर्मणि ।
आयुः प्राकाश्यमैश्वर्य्यं रूपञ्च लभते सुखम् ॥ ४७९ ॥
यज्ञोपवीतं यो दद्यात् श्राद्धकाले तु धर्मवित् ।
पावनं सर्वविप्राणां ब्रह्मदानस्य तत्फलम् ॥ ४८० ॥
कृते विप्राय यो दद्यात् श्राद्धकाले कमण्डलुम् ।
मधुक्षीरश्रवा धेनुर्दातारमनुगच्छति ॥ ४८१ ॥
चक्रवद्धञ्च यो दद्याच्छ्राद्धकाले कमण्डलुम् ।
धेनुं स लभते दिव्यां घण्टापह्नतदोहनाम् ॥ ४८२ ॥
तूलपूर्णे तु यो दद्यात् पादुके श्राद्धकर्मणि ।
शोभनं लभते यानं पादयोः सुखमेव च ॥ ४८३ ॥
व्यजनं तालवृन्तञ्च दत्त्वा विप्राय संस्कृतम् ।
प्राप्नुयात् स्पर्शयुक्तानि प्रदानानि मृदूनि च ॥ ४८४ ॥
श्रादेषूपानहौ दद्याद् ब्राह्मणेभ्यः सदा वुवः ।
दिव्यं स लभते चक्षुर्वाजियुक्तांस्तथा रथान् ॥ ४८५ ॥
श्रेष्ठं छत्रञ्च यो दद्यात् पुष्पमालाविभूषितम् ।
प्रासादो ह्युत्तमो भूत्वा गच्छन्तमनुगच्छति ॥ ४८६ ॥
पात्रं च तैजसं दद्यान्मनोज्ञं श्राद्धभोजने ।
पात्रं भवति कामानां विद्यानां च धनस्य च ॥ ४८७ ॥
रजतं काञ्चनं चैव दद्याच्छ्राद्धेषु यः पुमान् ।
दत्त्वा स लभते दानात् प्राकाम्यं धनमेव च ॥ ४८८ ॥
धेनुं श्राद्धेषु यो दद्याद् गृष्टिं कुम्भोपदोहनाम् ।
गावस्तमुपतिष्ठन्ति गवां पुष्टिस्तथैव च ॥ ४८९ ॥
शयनासनदानानि भूमयो वाहनानि च ।
श्राद्धेष्वेतानि यो दद्यात् सोऽश्वमेधफलं लभेत् ॥ ४९० ॥
क्षौमकौशेयकार्पासं दुकूलमहतं तथा ।
श्राद्धेष्वेतानि यो दद्यात् कामानाप्नोत्यनुत्तमान् ॥ ४९१ ॥

अलक्ष्मीं नाशयत्याशु तमः सूर्य्योदये यथा ।
भ्राजते च विमानाग्रे नक्षत्रेष्विव चन्द्रमाः ॥ ४६२ ॥

प्राकाम्यमैश्वर्य्यविशेषः । गृष्टिः प्रथमप्रसूता गौः ।

राजतं रजताक्तं वा पितृणां पात्रमुच्यते ।
रजतस्य कथा वापि दर्शनं दानमेव च ।
अनन्तमक्षयं स्वर्ग्यं राजतं दानमुच्यते ॥ ४६३ ॥

एवमन्यान्यपि फलान्युक्तान्यनुसन्धेयानि ॥

अथ परिवेषणविचारः । मनुवृहस्पती,—

पाणिभ्यां तूपसंगृह्य स्वयमन्नस्य वर्द्धितम् ।
विप्रान्तिके पितॄन् ध्यायन् शनकैरुपनिक्षिपेत् ॥ ४६४ ॥ (मनु ३/२२४)

## प्रभा

ब्रह्मपुराणे "स्रस्तभाण्डानि वर्ज्याणि पितृदैवतकर्मणि । "सौवर्णरौप्यताम्राश्मस्फाटिकाः शङ्खशुक्तयः । भिन्नान्यपि नियोज्यानि पात्राणि पितृकर्मणी"त्येतानि स्रस्तानि विशीर्णान्यपि नियोज्यानीत्यर्थः । याज्ञवल्क्यः—"हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः । यथालाभोपपन्नेषु रौप्येषु च विशेषतः" । निषिद्धपात्रमाह शातातप "पात्रे तु मृन्मये यस्तु श्राद्धे तु भोजयेत् पितॄन् । तत्र दाता पुरोधाश्च भोक्ता च नरकं व्रजेत्" । पैठीनसिः—"सीसकायसपाषाणपात्राणि हीनपात्राणि भग्नपात्रानीचे"ति ब्रह्मपुराणे पाषाणस्य विहितत्वादत्र च निषिद्धत्वात् विहितनिषिद्धमिति । ततश्च पात्रान्तराभावे तदुपादेयमिति कल्पतरुः । याज्ञवल्क्यवचने यथालाभोपपन्नेष्विति विहितपात्राणां मध्ये यान्युपलभ्यन्ते तेष्वित्यर्थ इति श्राद्धदीपिका । ब्रह्मपुराणीयेषु "पलाशे ब्रह्मवर्च्चस्वी आश्वत्थे राज्यमाप्नुयादित्यारभ्य "अथ पद्मपुटे दत्त्वा मुनीनां वल्लभो भवेत् । सिक्ते मधुघृताभ्यां च यथासम्भवमेव वेत्यन्तेषु वचनजातेषु कदलीपत्रस्योल्लेखाभावात् "विहित पात्राणां मध्ये यान्युपलभ्यन्ते तेष्विति श्राद्धदीपिकाव्याख्यानात् कदली पत्रे श्राद्धान्नं न दीयते इति व्यवहार दर्शनाद्द रघुनन्दनेनापि अन्यदितिपदेन कदलीत्वगपीत्यभिहितम् । श्राद्धे कदलीपत्रं न व्यवहार्य्यम् । पनसपत्रे तु वाजपेयेभिः श्राद्धीयान्नं परिवेश्यते । तथैव शिष्टाचारदर्शनात् । मिताक्षरायां "राजतैः पानसैर्वापि पात्रैः श्राद्धमुदीरितम् । श्राद्धवारिधौ "पनसे च पलाशे च तथैव कदलीत्वचा" । अतएव श्राद्धादौ पानसपत्रव्यवहारः शास्त्रसिद्ध एवेति भावः । ब्रह्माण्डपुराणवचने कदलीत्वचोपि विधानात् तत्समीचीन मे वेति सुधीभिर्विभाव्यम् ।

*मुक्तं ह्युभाभ्यां हस्ताभ्यां यदन्नमुपनीयते ।
तद्विप्र ! लुम्पन्त्यसुराः सहसा दुष्टचेतसः ॥ ४९५ ॥ (मनु ३।२२५)

गुणानपूपशाकाद्यान् पयो दधि घृतंमधु ।
विन्यस्य प्रयतः सम्यग् भूमावेव समाहितः ॥ ४९६ ॥ (मनु ३।२२६)

भक्ष्यं भोज्यञ्च विविधं मूलानि च फलानि च ।
हृद्यानि चैव मांसानि पानानि सुरभीनि च ॥ ४९७ ॥ (मनु ३।२२७)

उपनीय तु तत्सर्वं शनकैः सुसमाहितः ।
परिवेषयेत् तु परितो गुणान् सर्वान् प्रचोदयन् ॥ ४९८ ॥ (मनु ३।२२८)

यद्यद् रोचेत विप्रेभ्यस्तत्तद्दद्यादमत्सरः ।
ब्रह्मोद्याश्च कथाः कुर्य्यात् पितृणामेतदीप्सितम् ॥ ४९९ ॥
(मनु ३।२३१)

अन्नस्येति तृतीयार्थे षष्ठी । वर्धितं पूरितम् । उभाभ्याम् मुक्तं हस्तद्वयेनासम्बद्धम् । गुणान् अप्रधानानीत्यपूपादिविशेषणम् । भोजनेऽन्नस्यैव प्राधान्यादपूपादीनां गुणत्वम् । द्वितीयगुणानित्यत्र माधुर्य्यादिगुणान् कथयन्नित्यर्थः ।

परिवेशस्तु शस्तःस्याद् भार्य्यया पितृतृप्तये ।
पितृदेवमनुष्याणां साहाय्ये सा यतः स्थिता ॥ ५०० ॥

देवलः— स्थित्वैव निभृतः कर्ता मुदितः सादरः शुचिः ।
ततो विशदमानीय भोजयेत् प्रयतो द्विजान् ॥ ५०१ ॥

विशदं विमलम् । अन्नं सुसंस्कृतं शाकं मांसं दधि पयो मधु ।
धानाश्च मधुसंयुक्ता इक्षुंश्चैव सगोरसान् ॥ ५०२ ॥

शर्कराः फलमूलञ्च सर्वं दद्यादमत्सरः ।
श्राद्धं कृत्वा प्रयत्नेन त्वराक्रोधविवर्जितः ॥ ५०३ ॥

---

*मुक्तमित्युभाभ्यां हस्ताभ्यामित्यत्र उभयोहस्तयोर्मुक्तमितिपाठो दृश्यते वङ्गवासीमुद्रिते मनुसंहिताग्रन्थे ।

शङ्खः— उष्णमन्नं द्विजातिभ्यः श्रद्धया विनिवेदयेत् ।
अन्यत्र फलमूलेभ्यः पानकेभ्यश्च पण्डितः ।
भोजयेद् विविधं पश्चाद् गन्धमाल्योज्वलान्द्विजान् ॥ ५०४ ॥

श्राद्धं कृत्वेति पूर्वकालीनता न विवक्षिता। अन्यत्र फलमूलेभ्य इत्युष्णापेक्षया वोद्धव्यम्। तेन फलमूलादिकमपूपमपि देयं "यदिष्टं जीवतश्चासीत् तच्च दद्यात् प्रयत्नतः"।

आपस्तम्वः—"नैमित्तिकं तु यच्छ्राद्धं स्नेहवद् दद्यात्"। सर्पिर्मांसमिति प्रथमः कल्पः। अभावे तैलं शाकमिति।

देवलः— प्राप्तेऽपि कारणे श्राद्धे नैव क्रोधं समुत्सृजेत् ।
आश्रितः स्विन्नगात्रो वा न तिष्टेत् पितृसन्निधौ ॥ ५०५ ॥

## प्रभा

पूरितमिति। पात्रमितिशेषः। उपनिक्षिपेदिति। परिवेशनार्थं पाकस्थानादाकृष्यप्रथमं भोजनपात्रे न देयं किन्तु स्थाल्यादिकं पाणिभ्यां पात्रसमीपे भूमौ संस्थाप्य पश्चात् पाणिभ्यां पात्रान्तरिताभ्यां श्राद्धे परिवेशनं कुर्यामितिरघुनन्दनः। उभाभ्यां हस्ताभ्यामिति उभाभ्यां हस्ताभ्यामाहृत्य परिवेशयेदिति मत्स्यपुराणैकवाक्यत्वात्। प्रचोदयन्निति। एतदमुकव्यञ्जनं एतदमुकव्यञ्जनमितिप्रत्येकं नाम बदन्नित्यर्थः। गुणान् उपकरणानि। गुणान् व्यञ्जनानिअन्नापेक्षयाप्राधान्याद्गौणयुक्तान्। सूपशाकाद्यान् प्रयतःशुचिःसमाहितः अनन्यमनाः सम्युग्यथा न विशीर्य्यन्ति तथा भुमावेव स्वपात्रस्थान् स्थापयेन्न दारुफलकादावितिकुल्लुकः। भुमावेवेति। न तु व्यञ्जनादिपात्रान्यन्नपात्रोपरि निक्षिपेत्। पात्रान्तरासत्त्वे पात्रं विना केवलं व्यञ्जनमन्नपात्रोपरि देयमेवेति वोध्यम्। ब्रह्मोद्याश्चेति परमात्मनिरूपणपराः कथाश्च कुर्य्यादिति। ततश्च "स्वाध्यायं श्रावयेत् पित्रो धर्मशास्त्राणि चैव हि। आख्यानानीतिहासांश्च पुराणानि खिलानि च ॥ (मनु ३।२३२॥) स्वाध्यायं वेदम्; मानवादीनि धर्मशास्त्राणि; आख्यानानि सोपर्णमैत्रावरुणादीनि; इतिहासान् महाभारतादीन्; पुराणानि ब्रह्मपुराणादीनि; खिलानि श्रीसुक्तशिवसूक्तादीनि श्राद्धे ब्राह्मणान् श्रावयेदिति च कुल्लुकभट्टः। पानकेभ्य इति। यथोक्तपरिमितशर्करानिम्बूरसयुक्तोऽथवान्यम्लायुक्तपक्वरसरूपपानद्रव्यविशेष इति शब्दकल्पद्रमधृतपाकराजेश्वरवाक्यात्।

न चात्र श्येनकाकादीन् पक्षिणः प्रतिषेधयेत् ।
तद्रूपाः पितरस्तत्र समायान्तीति वैदिकाः ॥ ५०६ ॥

कारणे क्रोधस्येतिशेषः । समुत्सृजेदभिव्यञ्जयेत् । आश्रित उपाश्रितः ।

मनुः— यद्यद् ददाति विधिवत्सम्यक् श्रद्धासमन्वितः ।
तत्तत् पितृणां भवति परत्रानन्तमक्षयम् ॥ ५०७ ॥ (मनु ३।२७५)

यमः— यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा श्राद्धेषु मिष्टान्नं मन्त्रः प्रीणयते पितॄन् ॥ ५०८ ॥

( यमशातातपौ, )—

स्रुतं नखैश्चतुर्भिश्च यो दद्यात् पाणिना घृतम् ।
दाता पुण्यं न चाप्नोति भोक्ता पापगतिं व्रजेत् ॥ ५०९ ॥

माक्षिकं फाणितं शाकं गोरसं लवणं धृतम् ।
हस्तदत्तानि भुक्त्वा च दत्वा सान्तपनं चरेत् ॥ ५१० ॥

( शातातपवशिष्ठवृहच्छातातपाः )—

हस्तदत्ता तु ये स्नेहा लवणव्यञ्जनानि च ।
दातारं नोपतिष्ठन्ते भोक्ता भुञ्जीत किल्विषम् ॥ ५११ ॥

तस्मादन्तरितं देयं पर्णेनैवतृणेन वा ।
प्रदद्यान्न तु हस्तेन आयसेन कदाचन ॥ ५१२ ॥

( वृद्धशातातपलघुहारीतेष )—

आयसेन तु पात्रेण यदन्नं सम्प्रदीयते ।
भोक्ता विष्ठासमं भुंक्ते दाता तु नरकं ब्रजेत् ॥ ५१३ ॥

( बृद्धशातातपः, )—

पात्रे तू मृन्मये यस्तु श्राद्धे भोजयते पितॄन् ।
तत्र दाता पुरोधाश्च भोक्ता च नरकं ब्रजेत् ॥ ५१४ ॥

हारीतः,—पङ्क्त्यां चैवोपविष्टेभ्यः समं गन्धादिभोजनम् ।
न पङ्क्त्या विषमं दद्यान्न याचेन च दापयेत् ॥ ५१५ ॥

याचिता दापिता दाता न ते स्वर्गस्य गामिनः ।
कृच्छ्राद्वा दशरात्रेण मुच्यते कर्मणस्ततः ॥ ५१६ ॥
तस्माद्विद्वान् नैव दद्यात् नाभियाचेन्न दापयेत् ।

हारीतः,—यस्त्वेक पङ्क्त्या कुरुते विशेषं
स्नेहाद् भयाद् वा यदि वार्थहेतोः ।
ऋषिप्रणीतस्मृतिवेददृष्टां
तां ब्रह्महत्यां ऋषयो वदन्ति ॥ ५१७ ॥

लघुहारीत-विष्णु-शातातपोशनसः
अत्युष्णं सर्वमन्नं स्याद्भुञ्जीरंस्तेऽपि वाग्यताः
न च द्विजातयो ब्रूयुर्दात्रा पृष्टा हविर्गुणान् ॥ ५१८ ॥ ( मनु ३।२३६ )
यावदुष्णं भवत्यन्नं यावदश्नन्ति वाग्यताः ।
तावदश्नन्ति पितरो यावन्नोक्ता हविर्गुणाः ॥ ५१९ ॥ ( मनु ३।२३७ )

"वाग्यता" इत्युक्तावपि पुनर्हविर्गुणानभिधानोक्तिर्हस्तसंज्ञादिनापि हविर्गुण-प्रतिपादननिषेधपरा ।

## प्रभा

तस्मादन्तरितमिति । पर्णेन तृणेन कुशादिना वा अन्तरितं व्यवहितं कृत्वा देयमित्यर्थः ।

हस्तेनेति । एकेनहस्तेनेत्यर्थः । "एकेन पाणिना दत्तं शूद्र दत्तं न भक्षयेदित्यादित्य-पुरानीयैकपणिदत्तशूद्रदत्तभक्षणनिषेधेनैकपाणिना परिवेशनस्यापि निषिद्धत्वात् । परिवेशनस्यापिदानविशेषरूपत्वादिति काशीरामः । नोपतिष्ठन्ते न दानफलभागिनं कुर्वन्तीत्यर्थः । किल्विषं पापजनकम् । आयसेन लौहपात्रेण ।

"एकपङ्क्तुपविष्ठानां विषमं यः प्रयच्छति । दुष्कृ हरते पङ्क्त्या अन्नं सृह्लातियश्चतत्" कुनदीसेतुकारस्य कन्याविघ्नकरस्य च । पङ्क्त्या विषमकारस्य निष्कृतिर्नोपपद्यते "इत्यादिदेवलवचनाच्चैकपङ्क्त्यां स्नेहाद् भयाद् वा विषमं परिवेशनं न कार्य्यम् । भोजनकालेऽन्तर्जानुना भवितव्यं" निरङ्गुष्ठश्च यच्छाद्धं वहिर्जानु च यत्कृतम् । वहिर्जानु च यद्भुक्तं सर्वमेवासुरं व्रजेदिति याज्ञवल्क्य-वचनात् ।

अन्नपानकशीतोदविविभ्यो ह्यवलोकितः ।
वक्तव्ये कारणे संज्ञां कुर्वन् भुञ्जीत पाणिना ॥ ५२० ॥ ( देवलः )

अन्नादिदानार्थं दाताऽवलोकितः संज्ञां हस्तादीनां सङ्केतं कुर्य्यात् ।

उद्धरेद् यदि पात्रं तु ब्राह्मणो ज्ञानदुर्वलः ।
हरन्ति राक्षसास्तस्य भुञ्जानोऽन्नञ्च सुन्दरि ! ॥ ५२१ ॥ ( वाराहे )

यत्र भोजनपात्रं तिष्ठति तत्स्थानात् तस्योद्धरणं न कार्य्यमित्यर्थः । शातातपः

उपवीतं कटौ कृत्वा कुर्य्याद् गात्रानुलेपनम् ।
एकवासाश्च योऽश्नीयान्निराशाः पितरो गताः ॥ ५२२ ॥ ( शीतातपः )

**प्रभा**

एकवासाश्चेति । तथैवामन्त्रितो दाता प्रातःस्नातः सहाम्बरः । आरभेत नवैः पात्रै रन्वारम्भं सवान्धवः ॥ इति देवलवचने सहाम्बर "इतिद्वितीयवस्त्रप्राप्त्यर्थम् एकवस्त्रस्य नग्नत्वेन तत्प्रतिषेधात् । एतेनैव कुशरज्वादिवस्त्रप्रतिनिधिर्नात्र भवतीति सूचितम् । एवमेव स्नाने ब्रह्मदत्तभाष्यकल्पतरूप्रभृतयः "इतिरघुनन्दनः" । "सवान्धवः" इत्यनेनान्नपाके सपिण्डानामधिकारः । अन्नपाकातिरिक्तपाके सपिण्डभिन्नस्याप्यधिकारः सूचित इति काशीरामः । श्राद्धे पाकार्थतण्डुलस्य सकृत्प्रक्षालनमाह गोभिलः "त्रिःफलिकृतां स्तण्डुलांस्त्रिर्देवेभ्यःप्रक्षलयति द्विमनुष्येभ्यः सकृत्पितृभ्य इति । मनुष्येभ्य सनकादिभ्य इत्यर्थः । प्रायश्चित्तं च कार्य्यमिति । सामान्यतो मांसभक्षणे प्राजापत्यव्रतस्य विधानात् तदशक्तौ "प्राजापत्य व्रताशक्तौ धेणुं दद्यात् पवस्विनीं । धेनोरभावे दातव्यं तुल्यं मूल्यं न संशयः ।" वस्तुतस्त्वत्र पर्वसुमांसभक्षणप्रायश्चित्तमेकाहोपवासरूपं कर्तव्यम् । पञ्चगव्यपानं च । कृतमांसभक्षण सङ्कल्प-वर्जनेन विप्रैनैतादृशस्थले निमन्त्रणं न स्वीकार्य्यमिति स्फुटीभविष्यत्युपरिष्टवात् । अपिच "विना मांसेन मधुना विना दक्षिणयाशिधा । सम्पूर्णं श्राद्धकर्म स्याद्व्यतिषु श्राद्धभोजिषु" इतिस्मृतेर्य्यत्यादिब्राह्मणकश्राद्धे वहुफलप्राप्तिदर्शनात्तु मधुमांसयोः श्राद्धे दानाभावे दोषप्रतिपादकवचनाभावात् केवलफलाधिक्यस्योपपादनात् "ब्राह्मणः काममश्नीयाश्राद्धे व्रतमपीड़यन्" इति योगीश्वरेणोक्तत्वात् । अत्र यतिपदं ब्रह्मचारिनिवृत्तमांसादनदिशौचाचारसम्पन्नब्राह्मणोपलक्षकं, तेन यत्यादि-ब्राह्मणकश्राद्धे फलातिशयलाभलोभाम्मधुमांसादेरदानमेव युक्तम् ।

राजगुरुर्गदाधरास्तु "चतुर्द्दश्यादिपर्वस्वपि दैवात् कृतनिमन्त्रणस्वीकारेण मांसं भक्षणीयम् पर्वसु मांसभक्षणदोषापेक्षया श्राद्धीय मांसभक्षणत्यागे दोषगौरवादित्याहुः ।

सन्धादं स्यात् परिभ्रष्टं नाभिदेशे व्यवस्थितम् ।
एकवस्त्रं तु तं विद्याद् दैवे पित्र्ये विवर्जयेत् ॥ ५२३ ॥ ( शातातपः )
नियुक्तश्चैव यः श्राद्धे यत्किञ्चित् परिवर्जयेत् ।
पितरस्तस्य तं मासं नैराश्यं प्रतिपेदिरे ॥ ५२४ ॥ ( उशनाः )

यत्किञ्चित् परिविष्टमरोचमानमपि यथाशक्ति किञ्चिदपि भक्षनीयमित्यर्थः ।

यथाविधि नियुक्तस्तु यो मांसं नात्ति मानवः ।
स प्रेत्य पशुतां याति सम्भवानेकविंशतिम् ॥ ५२५ ॥ ( मनुः ? )
नियुक्तस्तु यदा श्राद्धे यस्तु मांसं न खादति ।
यावन्ति पशुरोमाणि तावन्नरकमश्नुते ॥ ५२६ ॥ ( यमहारीतौ )

इतिदोषश्रवणात् श्राद्धनियुक्तेन ब्राह्मणेनावश्यं मांसं भक्षणीयम् । नत्वरुच्यादिना वर्जनीयम् । अष्टम्यादौ दैवान्निमन्त्रणस्वीकारे पर्वसु मांसभक्षणदोषस्याल्पीयस्त्वात् श्राद्धीयमांसवर्जनदोषस्य च गुरुत्वान्नियुक्तेन मांसभक्षणप्रायश्चित्तं च कार्य्यम् ।

कृतवर्जनसङ्कल्पेन पुनर्निमन्त्रणं न स्वीकार्य्यम् ।

भक्षयेत्प्रोक्षितं मांसं सकृद् ब्राह्मणकाम्यया ।
दैवे नियुक्तः श्राद्धे वा नियमे तु विवर्जयेत् ॥ ५२७ ॥ ( यमः )

नियमे वर्जनसङ्कल्पे कृते विवर्जयेत् । ब्राह्मणकाम्यया भक्षणं वर्जयेत् । दैवे वैश्वदेवसम्बन्धिनि श्राद्धे च पितृदेवसम्बन्धिनि नियुक्तो दैवकृत्ये पितृकृत्ये वा "भुङ्क्ष्वे"ति प्रेरितस्तां नियोगपदवाच्यां प्रेरणां वर्जयेत् न स्वीकुर्य्यात् । यद्वा नियोगमस्वीकृत्य मांसं वर्जयेदितिसम्बन्धः । निमन्त्रणस्वीकारे भक्षणसङ्कल्पभङ्गप्रसङ्गात् । अनिन्द्येनामन्त्रितो नोपक्रमेदित्यत्र आमन्त्रित इति प्राप्तकर्मणि निष्ठाप्रत्ययादामन्त्रणेन प्राप्तः स्वीकृतामन्त्रण इति यावत् । तेन कृतनिमन्त्रणस्वीकारस्य तदतिक्रमे दोषो न तु प्रथमतो निमन्त्रणास्वीकारे कश्चिद्दोषः । तेन कृच्छ्रचान्द्रायणादिकर्त्तुरिव कृतमांसवर्जनसङ्कल्पस्य निमन्त्रणस्वीकारे श्राद्धयज्ञयोर्निमन्त्रणस्वीकारे मांसभक्षणं वर्जयेदिति न्यायमूलमेव । यदा तु भ्रान्त्या निमन्त्रणं स्वीकृतवान् तदा भक्षयेदेव मांसमिति नृसिंहवाजपेयिनः । कथं तदन्यब्राह्मणासम्भवादापद्धर्मत्वेन प्रवृत्तौ

यजमानेन स्वकर्मवैगुण्यस्य प्रथमतएवाङ्गीकारान्नियुक्तः स्वसङ्कल्पाविरोधार्थं वर्जयेदेव मांसमितिविद्याकरवाजपेयिनः। विप्रमिश्रास्तुयावज्जीवं कृतामिषवर्जनसङ्कल्पब्राह्मणनिमन्त्रणे "हविष्यान्नेन वै मासं पायसेन तु वत्सरमिति योगीश्वरवचनात्कांस्यभोजिन्यायेन यजमानेन निरामिषमेव श्राद्धं कर्तव्यम्। ब्रह्मचारि-त्रिदण्डिसन्न्यास्यामन्त्रणे तु "ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीड़यनितिवचनात् तेन न भक्षणीयं मधु मांसं चेत्याहुः।

अथ श्राद्धीयान्नादेर्विष्णुनिवेदनविचारः।

ततोऽन्नं वहुसंस्कारं नैकव्यञ्जनभक्ष्यवत्।
चोष्यपेयसमृद्धञ्च यथावदुपपादयेत् ॥ ५२८ ॥ ( शङ्खः )

## प्रभा

ब्राह्मणकाम्ययेति "पञ्चैतान्यव्रतघ्नानि आपो मूलं फलं पयः। हविर्ब्राह्मणकाम्याच गुरोर्वचनमौषधम्" ॥ इत्यादिवचनेन ब्राह्मणकाम्यया प्राप्तस्यापि भोजनस्य नियमेन कृतवर्जनसङ्कल्पो विवर्जयेत्। कांस्यभोजिन्यायेनेति "कार्तिके वर्जयेत्कांस्यमितिकाशीखण्डवचनात् कार्तिकमासादन्यत्र कांस्यपात्रे भोजने न दोषः, "कांस्यंमांसंमसूरञ्च चणकं कोरदूषकम्। शाकं मधु परान्नञ्च त्यजेदुपवसन् स्त्रियम्" इति कूर्मपुराणवचनादिति तिथितत्त्वधृतसूरिसन्तोषवचनादुपवासदिनाद्न्यत्र कांस्यपात्रे भोजनेन दोषः, अथच "ताम्बुलाभ्यञ्जसंचैव कांस्यपात्रे च भोजनम्। यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत्दितिप्रचेतोवचनाद्द ब्रह्मचारिप्रभृतीनां सर्वदा निषेधः इतिवत् यतिब्रह्मचारिब्राह्मणे मत्स्यमांसादिकं सर्वदैव न देयमिति प्रतीयते। भोजनस्य रागप्राप्तत्वात कलौच श्राद्धे मांसादनस्य सामान्यतो निषिद्धत्वात् "गो-महिषादिमांसदाननिषेधोक्तेश्च प्रसङ्गाभावादसङ्गतेश्च "किञ्चाम्मन्मते श्राद्धस्य नैव यागरूपत्वमित्युक्तं वाक्याभावादिति यो हेतुर्दत्तः सोऽपि नादरनीयः। "ब्रह्म-विष्णु-शिवादीनां कलौ मांसेन चार्च्चनम्। राज्ञः श्रियं कुलं हन्ति तस्मात् तत्परिवर्जयेदेवं" यत्यादिब्राह्मणकश्राद्ध इव शालग्रामशिलाचक्रब्राह्मणकश्राद्धे गयाधिकफलोक्तेर्मांसाभावे दोषानुक्तेश्च फलसम्वन्धविहितमांसदानमनुचितमित्यस्माकं सिद्धान्त इतिराजगुरुगदाधरसिद्धान्त एव( समादरनीयः समाचरणीयश्चेतिदिक।

इतिवाक्ये "आग्नेयांश्चतुरो मुष्णानित्यादिवद् पितृसम्वन्धाश्रवणाद् व्रीहिभियजेतेतिवदनेन व्यञ्जनादेः श्राद्धसाधनत्वमात्रमुच्यते। न सर्वस्य पितृदेवत्वमिति तत्र देवयज्ञादेर्वाधकाभावेन कर्तव्यतदर्थपृथक्पाकासम्भवेऽ विरोधात्स एव पाकस्तन्त्रेण तदर्थेऽर्पीतिसाधारण एव। "विष्णुप्रभुक्तशेषेण-यष्टव्यं देवतान्तरमिति वचनात् प्रागपि भगवदर्च्चने न विरोधः।

यत्तु "पितृपाको न दातव्यो यावत् पिण्डान् न निर्वपेदि"तिपठन्ति तत्कल्पतरावलिखितत्वात् सन्दिग्धप्रामाण्यं केवलमग्रावलेहितमिवाग्रभुक्तत्वमेव तत्र निषिद्धम्। तत्प्रामाण्येऽपितत्र पाके पितृसम्वन्धोक्तेः सर्वप्रदानाधिकरणन्यायेन "सर्वं पितृदेयं स्या"दितिपाकयज्ञार्थमन्यएव पाकःस्यात्। तत्र पाकेऽपि पाकानन्तरं द्विधाकृतेश्राद्धार्थेभागो देवायान्नदाननिषेधः स्यात्। भागान्तरं पुनः श्राद्धस्यादावन्तेऽपि वा विष्ण्वर्चने न विरोधः।

## प्रभा

ततेऽन्नं बहुसंस्कारमिति। तत्र विहितानामभ्यवहरणीयद्रव्यानां यथालाभमुपकल्पितानां श्राद्धस्वरूपसम्पादकत्वं, तदभावे तु अविहिताप्रतिषिद्धं विहितसदृशमुपदातव्यम्। यत्तु श्राद्धप्रकरण एव प्रतिषिद्धं तत्प्रतिनिधित्वेनापि नोपादेयम्। यत्र तु फलविशेषसंयोगस्तस्य श्राद्धस्वरूपसम्पादकत्वेसति तत्फलविशेषसम्पादकत्वमसीतिवोध्यम्। यत्र न फलविशेषसंयोगस्तेषां नित्यवदङ्गत्वात् तैर्विना श्राद्धाङ्गानिष्पत्तिरेव। यत्तु निषिद्धं गोमहिषमांसादि फलविशेषार्थं विहितं तत्तत्फलकामिभिरेवोपादेयं, न तु श्राद्धस्वरूपसम्पादकत्वेन। तदपि कलौनिषिद्धं "मांसादनंतथा-श्राद्धे" इत्यादि वचनात्। यत्तु यस्मिन्नेव द्रव्ये पितृतृप्तिः कालाल्पीयस्त्वंभूयस्त्वं वा तत्तस्यैव द्रव्यस्यावस्थाविशेषापेक्षया वोद्धव्यम्। केचित्तु तालफल-कदली-कुसुमहरितकर्यादीनां कषायवहुलत्वात् तन्न देयमितिकोमलतालफलस्य मधुरत्वाद्देयत्वमिति वदन्ति। तन्न विचारसहम् "फलं तालतरूणां तु भुक्त्वानरकमृच्छतीति-वचने पक्वापक्वसाधारणस्य निषिद्धत्वात्। हिलमोचिकाशाकादे र्हविष्येऽपि विधानदर्शनात् तिक्तत्वेऽपि देयत्वमेव। जम्भीर-वीजपूरकादीनाम्लरसत्वान्नदेयत्वम्। पक्वतिन्तिड़ीनां माधुर्य्यसाहित्याद्दानसमाचारः। लवणत्वात्-समुद्रजलादिकं न देयमित्यास्तां विस्तरः। व्रीहिभिर्यजेतेति। तत्र व्रीह्यादेर्यथाहोमसाधनत्वं प्रतीयते तथाऽत्रापि व्यञ्जनादेः श्राद्धसाधनत्वमात्रम्। न सर्वस्येति। श्राद्धमूले सर्वस्य

## प्रभा

द्रव्यस्य पितृदेवत्येस्योक्तत्वेऽपि न सर्वस्य द्रव्यस्यापि तु देवयज्ञादेरपि तत्र विहितत्वात् श्राद्धार्थमन्नपाकेऽपि पितृयज्ञार्थं पृथक् पाकासम्भवे तदन्नं द्विधा विभज्य विष्णवे देयमेव। अतएव सर्वप्रदानाधिकरणन्यायः समुत्थापितः। स च न्यायो यथा पूर्वमीमांसायां "सर्वप्रदानं हविषस्तदर्थत्वात्" (अ ३, पा ४ अः १४)

स्तो दर्शपूर्णमासौ ; तत्र समाम्नायते यदाग्नेयाष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवतीति। तत्र सन्देहः किं कृत्स्नं हविरग्नये प्रदातव्यमुत शेषयितव्यं किञ्चित् किञ्चिद्दातव्यमिति, किं प्राप्तम्। कृत्स्नं हविः प्रदीयते कुतः तदर्थत्वात् "पुरोडाश आग्नेयः कर्तव्य इतिवचनम्। तस्मात् सर्वं प्रदातव्यमिति भाष्यम्।

अष्टाकपालादिशब्दैः समस्तं द्रव्यं देवतार्थमवगमितमाहवनीयप्रक्षेपेण च हविष्ये देवतार्थता भवति "यदाहवनीये जुह्वति" इतिविधेः "अग्निमुखा वै देवा" इतिचार्थबादात्। एवं च सति ततश्चेत्किञ्चिदस्यपनीयेत तदाऽन्यच्छ्रुतमन्यत्-क्रियेत, तस्मात् सर्वप्रक्षेपः, किंपुनरयंपूर्वपक्षवादी शेषकार्य्याणां स्विष्टकृदिड़ाप्राशित्र शंयवाककालभक्षचतुर्धाकरणानां विधिं न पश्यति, सत्यं न पश्यतीतिकेचित्, न त्वेतद्द युक्तमिव, न ह्येवं क्वचित्पूर्वपक्षो न भवेत् अतः पश्यन्नेवानेनाभिप्रायेण मन्त्रयत इति वक्तव्यम्। "विद्यमानेषु शेषेषु द्रव्याणामप्रयोजकाः। भवेयुः शेषभाजो हि निःशेषे तु प्रयोजकाः" ॥ यदा हि द्व्यवदानमात्रे हुते-पुरोडाशादयः सशेषाः क्रियन्ते तदा उत्तरार्धात्स्विष्टकृते-समवद्यति इत्येवमादिचोदनावशेन ऐकदेशद्रव्यं चोत्पत्तौ विद्यमानसंयोगात् इत्येवं स्विष्टकृदादीनामप्रयोजकत्वं भवति, यदा तु खलु सर्वप्रदानमवगम्यते तदा विद्यमानसंयोगासम्भवाच्चोदितैक-देशानुष्ठानानुपपत्त्याशक्यमेकदेश्युत्पादनमध्यवसितुमिति स्विष्टकृदाद्यर्थं पुरोडा-शान्तरान्युत्पाद्येरन्। शेषशब्दः "शेषात् स्विष्टकृते समवद्यति" इत्यादिषु कथमिति-चेदुच्यते "हविरन्तरमालोच्यशेषशब्दो भविष्यति। आज्येन शेषमितिवत् तच्छेशेषेणेतिवच्च नः" ॥ यथैव "आज्येन शेषं संस्थापयति इतिपूर्वकर्मणः पर्य्यवसानाधिकेपूर्वसदृशे वा शेषशब्दः प्रयुज्यते, यथा च "ततः शेषेण विशिष्ट-देशजात्यादिमन्तोजन्मप्रतिपद्यन्ते इति स्वर्गफलकर्मिणो निःशेषोपयोगादन्यफलस्य चान्यत्र व्यापारासम्भवात् ततोऽन्येनेतिवक्तव्ये ततः शेषेणेति गौतमाचार्य्येणोक्तम्। एवमिहापि यत् प्रधानहविर्भ्योऽन्यद्धविस्तेनैवान्यत्वेनाऽऽधिक्येन वा भविष्यति। अथवा गुणत्वेन वा शेषादित्येव मभिधास्यते। शेषशब्दो ह्युपर्य्युक्तेतरद्द विद्यमानं ब्रवीति ; न च प्रधानहविषां किञ्चिद्द्विद्यते। अन्येषां च सर्वमेतद्द रूपमस्ति,

केवलमेतद्वाक्यानादरेण विभागेपिण्डदानान्ते

यत्किञ्चित् पच्यते गेहेभक्ष्यं भोज्यमथापिवा ।
अनिवेद्य न भोक्तव्यं पिण्डमूले कथञ्चन ॥ ५२६ ॥

इतिवचनात् सर्वं भाण्डस्थमन्नादिकं पितॄनुद्दिश्य उत्स्रष्टव्यम् । अतएव "भूञ्जीत पितृसेवितमिति स्वभोज्यभागस्यापि पितृसेवितत्वमुक्तम् । तच्च पुरोडाशयजमानभागवदविरुद्धम् । तेन तत्र श्राद्धान्तेतदन्नादिदानमपराधः ।

पितृशेषं तु यो दद्याद्धरये परमात्मने ।
रेतोदाःपितरस्तस्य भवन्ति क्लेशभागिनः ॥ ५३० ॥

इत्यप्येतत्परमेव । अतः पिण्डदानात्पूर्वं तद्दाने न कश्चिद्विरोधः । अतएव श्राद्धेपरिवेषणकाल एवपरमेश्वरार्थमपिसर्वंपरिवेष्यते

नन्वेवं पितृशेषभोजननियमादनिवेदितभक्षणदोषः । निवेदितस्यात्र विष्णुभोजनचिन्तामात्रपरत्वात् । पितृशेषदानस्यैव निषेधात् । यदा तु

हरेर्निवेदितं सम्यग् देवेभ्योजुहुयाद्धविः ।
पितृभ्यश्चापि तद् दद्यायतदानन्त्याय कल्पते ॥ ५३१ ॥

## प्रभा

तस्माद्द्रव्यान्तराणि गृह्येरन् । यथा वक्ष्यति 'निर्देशात्तस्यान्यदर्थादिति"चेत् अथाप्यत्यन्तं शेषशब्दानुरोधं कृत्वा तेषामेव किञ्चिच्छेष्यते, तथापयस्त्येबान्यद्विचारस्य प्रयोजनं नावश्यं पक्षोक्तेनैव प्रयोजनेन भवितव्यम् । इदमपि सम्भवति, यदा प्रधानवाक्यादशेषप्रदानप्रसक्तौ सत्यां शेषकार्य्यवशेन शेषाः स्थाप्यन्ते, तदा यथैव प्रधानं तस्य हविषः प्रयोजकमेवं स्विष्टकृदादीन्यपीति ; तदर्थावदाननाशदोषापहारेष्वपि प्रधानवदेव हविरन्तमुत्पाद्येत, यदा पुनः प्रधानचोदनाक्षिप्तस्यैव शेषस्य स्विष्टकृदादीनि ग्राहकानि भवन्ति तदा तेषां परप्रयुक्तद्रव्योपजीवनादप्रयोजकत्वे सति नाशदोषापहारेष्वप्यक्रिया सिद्धा भवति । तस्मात् सत्यप्युभयोः पक्षयोरसर्वप्रदानेऽस्तिप्रयोजनमित्यर्थवान् विचारः ॥ अः ३, पाः ४ अधि १४ सूत्र ३७ ॥" इति तन्त्रवार्तिकादावनुसन्धेयमिति । एवञ्चात्रापीति वक्ष्यति "यत्किञ्चित्पच्यते गेहे" इत्यादि ।

इतिवाक्यानुसारेण सर्वमादौ विष्णवे निवेद्यते। तदेतत् शङ्कायां

कुशं पत्रञ्च पुष्पञ्च गवामर्थे तृणानि च।
इन्दुलोपे न दूष्यन्ति छेदने समिधस्तथा॥ ५३२॥

इति वाक्यं दृश्यते तत्प्रामाण्ये तत्राप्यदोषः।

अप्सु तस्मिन्नहोरात्रे पूर्वं विशति चन्द्रमाः।
ततो वीरुत्सु वसति प्रयात्यर्कं ततः क्रमात्॥ ५३३॥

इतिवचनादमावास्यामध्य एवायं नाद्यन्तयोः। अयमपि निषेधः आपस्तम्वः "न चातद्गुणायोच्छिष्टं दद्युः"। अतद्गुणाय श्राद्धभोक्तृत्व-गुणरहिताय।

श्राद्धं भुक्त्वा य उच्छिष्टं बृषलाय प्रयच्छति।
स मूढो नरकं याति कालसूत्रमवाक्शिराः॥५३४॥ (मनु ३।२४९)

ब्रह्माण्डे स्त्रीशूद्रायानुपेताय श्राद्धोच्छिष्टं न दापयेत्।
यो दद्याद् रागसम्मोहान्न तद् गच्छति वै पितॄन्॥ ५३५॥
तस्मान्न देयमुच्छिष्टमन्नाद्यं श्राद्धकर्मणि।
अन्यत्र दधिसर्पिर्भ्यां शिष्याय च सुताय च॥ ५३६॥

अन्यत्र दधिसर्पिर्भ्यामिति-दधिसर्पिर्व्यतिरिक्तमुच्छिष्टं न कस्मैचिदपि दातव्यम्॥

दधि-सर्पिषोस्तु शिष्यपुत्रयोरपि श्राद्धभोक्तृगुणोपेतयोरभ्यनुज्ञा इति कल्प-तरुकाराः।

मध्वाज्यतिलसंयुक्तं सर्वव्यञ्जनसंयुतम्।
उष्णमादाय पिण्डं तु कृत्वा विल्वफलोपमम्। ५३७॥

## प्रभा

अमावास्यामध्य एवायमिति। "वस्तुतस्तु अमावास्यातिथिमात्रेअयं दोषः" निषेधोऽमावास्यायामितिकल्पतरुव्याख्यानादिति। एवमेव कालसारः। निषेधः-कालमात्रके" इत्यन्नकालमाधवीयगर्गवचनाच्च। श्रुतिश्च "स एतांरात्रिं षोड़श्या कलया सर्वमिदं प्राणभृदनुप्रविश्य ततःप्रातर्जायते। तस्मादेतां रात्रिं प्राणभृतः प्राणान् न बिच्छिन्द्यात् अपि कृकलाशस्येति तस्मादयं निषेधः पुरुषार्थ एवेति कालसारः।

दद्यात् पितामहादिभ्यो दर्भमूलाद् यथाक्रमम् ।
भक्ष्यं भोज्यं तथा पेयं यत्किञ्चित् पच्यते गृहे ।
न भोक्तव्यं पितॄणां तदनिवेद्य कथञ्चन ॥ ५३८ ॥

अनिवेद्य न भोक्तव्यमिति सर्वमन्नमुपक्रम्य पिण्डवलित्वेन निवेदयेदित्यर्थः ।

असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम् ।
उच्छिष्टं भागधेयं स्याद् दर्भेषु विकिरश्च यः ॥ ५३९ ॥
उच्छेषणं भूमिगतमजिह्मस्याशठस्य च ।
दासवर्गस्य तत् पित्र्ये भागधेयं प्रचक्षते ॥ ५४० ॥
(मनुः ३।२४५।२४६, विष्णुश्च)

पित्र्ये पितृकर्मणि ।

प्राक् संस्कारात् प्रमीतानां संप्रोक्ष्यानमितिश्रुतिः ।
भागधेये मनुः प्राह उच्छिष्टोच्छेषणे उभे ॥ ५४१ ॥
पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ।
तीर्थश्राद्धे सदा पिण्डान् क्षिपेत्तीर्थे विचक्षणः ॥ ५४२ ॥ (मत्स्यपुराणम्)
पतिव्रता धर्मपत्नी पितृपूजनतत्परा ।
मध्यमं तु ततः पिण्डमद्यात् सम्यक् सुतार्थिनी ॥ ५४३ ॥
आयुष्मन्तं सुतं सुते *यशोमेधासमन्वितम् ।
धनवन्तं प्रजावन्तं सात्त्विकं धार्मिकं तथा ॥ ५४४ ॥
( मनुः ३।२६२-२६३ )

अन्यदेशगता पत्नी गर्भिणी रोगिनी तथा ।
तथा तं जीर्णवृषभश्छागो वा भक्तुमर्हति ॥ ५४५ ॥ ( वृहस्पतिः )

अस्यार्थः सर्वपिण्डानां तावद् गोजलादिगोचरतया प्रतिपत्तिः । मध्यमपिण्डस्य तु यदा अजे वृषभे वा प्रतिपत्तिस्तदा जीर्णे ।

प्रक्षाल्य हस्तावाचम्य ज्ञातिप्रायं प्रकल्पयेत् ।
ज्ञातिभ्यः सत्कृतं दत्त्वा बान्धवानपि भोजयेत् ॥ ५४६ ॥
उच्छेषणं तु तत्तिष्ठेद् यावद्विप्रा विसर्जिताः ।
ततोगृहवलिं कुर्य्यादिति धर्मो व्यवस्थितः ॥ ५४७ ॥
( मनुः ३।२६४-२६५ )

*विद्यादिति । यशोविद्यासमन्वितमिति, धार्मिकं सात्त्विकं तथा इति च पाठान्तराणि ।

ज्ञातिप्रायं ज्ञातिवहुलम्।

यज्ञेषु दक्षिणां पुण्यामिति संचिन्तयन् हृदि।
दरिद्रोऽपि यथाशक्ति दद्याद् विप्रेषु दक्षिणाम्॥ ५४८॥

वृहस्पतिः—हतमश्रोत्रियं श्राद्धं हता यज्ञास्त्वदक्षिणा।
तस्मात् पणं काकिनीं वा फलपुष्पमथापि वा।
प्रदद्याद् दक्षिणां यज्ञे तया समफलो भवेत्॥ ५४९॥
श्राद्धे नोद्वासनीयानि उच्छिष्टान्यादिनक्षयात्।
श्च्योतन्ते वै सुधाधारास्ताः पिवन्तः कृतोदकाः॥ ५५०॥
उच्छिष्टं न प्रमृज्याद्धि यावन्नास्तमितो रविः।
क्षीरधारास्ततो यान्त्यक्षयाः सञ्चरभागिनः॥ ५५१॥ ( वशिष्ठः )

श्चोतन्ते—क्षरन्ति। नोद्वासनीयानि भूमिष्ठोच्छिष्टानि। उच्छिष्टं न प्रमृज्यादिति। सञ्चरभागिनोऽन्यस्मै दत्तमन्नं सञ्चरति यत् तत् सञ्चरः। तद् ये भुञ्जते दासादयः ( इति कल्पतरुकाराः )

शेषमन्नमनुज्ञातं भुञ्जीत तदनन्तरम्।
इष्टैः श्राद्धं तु विधिवद् बुद्धिमान् सुसमाहितः॥ ५५२॥
( शातातपः )

## प्रभा

तमिति तं मध्यमं पिण्डमित्यर्थः। पतिव्रतेतिमनुवचने धर्मार्थकामेषु मनोवाक्-कायकर्मभिः पतिरेव मया परिचरनीय इति व्रतं यस्याः सा पतिव्रता धर्मपत्नी सवर्णा प्रथमोढ़ा श्राद्धक्रियायां श्रद्धाशालिनी पुत्रार्थिनी तेषां पिण्डानां मध्यमं पितामहपिण्डं भक्षयेत्। "आधत्त पितरो गर्भं कुमारं पुष्करस्रजमित्यादिगृह्योक्तमन्त्रेणेतिकुल्लूकः। तेन च दीर्घायुषं कीर्तिधारणात्मकबुद्धियुक्तं धनपुत्रादिसन्ततिधर्मानुष्ठानसत्त्वाख्यगुणान्वितं पुत्रं जनयतीत्यर्थः।

भगिन्यो वान्धवाः पूज्या श्राद्धेषु च सदैव हि।
वन्दिमागधसूताश्च तौर्य्यत्रिकविदस्तथा ॥ ५५३ ॥
अलब्धभागाः श्राद्धेषु नाशयन्ति महद् यशः।
तस्मात् तेऽपि विभक्तव्याः सकलञ्च विभज्य च ॥ ५५४ ॥ (ब्राह्मे)

यजमानस्य श्राद्धेमांसभक्षणविचारः। "शेषभोजिनलिप्येत" इतियजमानस्य श्राद्धशेषभोजनं विहितम्। तत्र "सर्वतः समुपादाय ग्रासावरार्धं प्राश्नीया"दित्यापस्तम्बवचनान्मांसस्यापि भक्ष्यत्वम्। ग्रासावरार्धं ग्रासादभ्यूनम्। तत्र प्रतिपत्तित्वात् श्राद्धाङ्गत्वेन विधेयत्वम्। तत्राभक्षणे श्राद्धवैगुण्यादवश्यमेव भक्षणम्। तथाचैकादश्यामुक्तम्—"आघ्राय पितृसेवितमिति। तेन चामावास्याष्टकादौ श्राद्धशेषमाहिताग्निना निरग्निना च निषेधस्य पुरुषार्थप्राप्तविषयत्वाद्विधेश्च क्रत्वर्थत्वाददीक्षितहोमाकरणवत् प्रतिषेधस्य विहितेतरविषयत्वात् क्रत्वर्थहिंसावन्नदोषः। यत्तु प्रतिपत्तेः प्रतिपादकप्रयोजकत्वाभावेन तथा श्राद्धे देयं यथा शेषो न तिष्ठति। ततोऽमावास्यादौ मांसं न भक्षणोयमिति शूलपाणिनोक्तं तद्दूषितं विप्रमिश्रैः। पर्वसु मांस भक्षणनिषेधस्यार्थकर्मत्वेन वलवत्त्वाच्छ्राद्धशेषभक्षणस्य प्रतिपत्तिरूपत्वेन दुर्वलत्वात् प्रतिपत्तिकर्मार्थकर्मणोर्बाध्यवाधकत्वस्य वलावलाधिकरणोक्तत्वाच्छेषमांस भक्षणं न कार्य्यमिति तु दीक्षिताः।

## प्रभा

श्राद्धे दक्षिणा। प्रदद्यात् दक्षिणां यज्ञे इतिवृहस्पतिवचने "हता यज्ञास्त्वदक्षिणाः "इतिश्रवणात् नित्योऽयंविधिः। श्राद्धाख्ययज्ञेऽपि दक्षिणा अवश्यं देया। नन्वेवं यतिब्राह्मणकश्राद्धे कथं दक्षिणा दानं "क्षेत्रं गावो हिरण्यञ्च यतेर्यस्यप्रतिग्रहः। तादृशं कल्मषं दृष्ट्वा प्रेताशौचं समाचरेदिति यतेः प्रतिग्रहाधिकाराभावादिति चेत् सत्यं श्राद्धदक्षिणायां सुवर्ण रजतं वा न नियम्यते। वृहस्पतिवचने "फलं पुष्पमथापि वेति दर्शनात् फलादिदानस्यासद्गुण्यसम्पादकत्वात् हरीतक्यादिफलमात्रस्याद्रकमूलस्य कौपीनयोग्यवस्त्रस्य वा दाने प्रतिग्रहे च न कश्चिद्द दोषः।

"अघोराः पितरो नः सन्तु दातारो नो ऽभि वर्धतामित्याशीर्वादस्तु नियमेन श्राद्धाङ्गत्वेन आमन्त्रणस्वीकारविधिनैव" तेषां स्वीकृता इति। आशीर्वादाकरणस्य

एवञ्च महालयपक्षमध्ये यजमानस्य परदिनकर्तव्यश्राद्धाङ्गनिरामिषभोजन-पूर्वदिनश्राद्धाङ्गशेषमांसभक्षणयोरेकदिने सन्निपाते आमिषभक्षणस्यार्थकर्मत्वेन शेषभक्षणस्य प्रतिपत्तिरूपत्वेन वाध्यवाधकभावः। विप्रमिश्रैस्तु विहित-निरामिषभोजनस्य कर्त्तृसंस्कारार्थस्य उपयोक्ष्यमाणसंस्कारस्य श्राद्धशेष-भक्षणस्य उपयुक्तसंस्कारस्य विरोधे,—

## प्रभा

पुरुषार्थत्वेन दुर्वलत्वात्. आशीर्वादस्य क्रत्वर्थत्वेन् वलवत्त्वात् नियुक्तैर्यतिभिरपि नियमेनाशीर्वादाः कार्य्या एवेति साम्प्रदायिका। इति कालसारः।

अथ श्राद्धकर्तुर्मांसभक्षणविचारः श्राद्धे मांसदानप्रकरणे तत्र स्मार्तसिद्धान्तः प्रतिपादितः। इदानीं मीमांसानयेन तं द्रढ़यति "इति तु दीक्षिताः" इत्यन्तेन ग्रन्थेन। "अष्टकादौ' अष्टम्यादावित्यर्थः। मांसादिभक्षणस्य निषिद्धत्वात्। प्रतिषेधस्येति। सामान्यविशेषन्यायेन सामान्यस्य विशेषेतरत्र सावकाशत्वादिति भावः। यथा "मा हिंस्यात् सर्वाः भुतानीति" सामान्यशास्त्रस्य 'वायव्यं श्वेतछागलमालभेतेति वैधेतरहिंसास्थले सावकाशत्वेन न विधेरानर्थक्यमितिसंक्षेपः। शूलपाणिमतं न्यायेन दूषयति। "विप्रमिश्रै रित्यन्तेन ग्रन्थेन"। पर्वसु मांसभक्षणस्येति। "अर्थकर्म-त्वेनेति। आत्मगतापूर्वजनकत्वस्यार्थकर्मत्वेनेति। आत्मगतापूर्वजनकं कर्म अर्थकर्म इति तल्लक्षणात्। तस्य च गुणकर्मणः प्रावल्यमिति भावः। "प्रतिपत्तिकर्मार्थ-कर्मणोरिति। "उपयुक्तसंस्कारकं प्रतिपत्तिकर्म। उपयुक्तस्य आकीर्णकरस्य द्रवस्य विहितदेशे प्रक्षेपः प्रतिपत्तिरिति प्रतिपत्तिलक्षणादिति" कृष्णयज्वानः। आकीर्णकरस्य यज्ञदेशव्याप्तस्येत्यर्थः। वाध्यवाधकत्वस्येति "विरोधे हि वलीयसा दुर्वलो वाध्यते" इतिनयेन प्रावल्यदौवल्यविचारेण प्रतिवध्यप्रतिवन्धकत्वस्येत्यर्थः। "वलावलाधिकरणोक्तत्वादिति।" श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौवल्यमर्थविप्रकर्षात् (मीः अः ३, पा ३, अधि ७, सूत्र १४) सूत्रभाष्ये शवरस्वामिना तन्त्रवार्त्तिके च कुमारिलभट्टेन प्रपञ्चितमिति तत्र तत्रानुसन्धित्सुभि रनुसन्धेयम्। अतिविस्तरभिया नात्र प्रपञ्च्यते। अत्र च प्रतिपत्तिकर्मणो गुणकर्मत्वेन अर्थकर्मणो दुर्वलमिति तात्पर्य्यम्। अतएव पर्वसु मांसभक्षणनिषेधस्यार्थकर्मत्वेन वलवत्वात् श्राद्धशेषभक्षणस्य प्रतिपत्तिकर्मरूपगुणकर्मत्वेन दुर्वलत्वात् श्राद्धशेषमांस-भक्षणं न कार्य्यमिति शूलपाणिमतमेव साधीयः, तेनामावास्यादौ मांसभक्षणं न कार्य्यमित्युक्तत्वादिति संक्षेपः।

उपयुक्तस्य संस्कारादुपयोक्तव्यसंस्क्रिया ।
गरीयसी प्रशास्तुश्च तेन दृष्टं प्रयोजनम् ॥ ५५५ ॥ इति ।

मैत्रावरुणदण्डाधिकरणन्यायेन निरामिषभोजनमेव कर्तव्यमित्युक्तम् । भुञ्जीत पितृसेवितमित्यत्र पुरोडाशकपालेन तुषानुवपतीतिवत् परप्रयुक्तद्रव्योपजीवित्वेनाऽप्रयोजकत्वाद्, द्वितीयानिर्द्देशेन प्रतिपत्तित्वाच्च । काकादिस्पर्शे शेषभक्षणलोपः । वैगुण्यसमाधानाय विष्णुस्मरणं कार्य्यम् ।

यत्तु श्राद्धशेषविषये विज्ञानेश्वरीये यजमानस्य मांसे तु यथारुचीत्युक्तम् । अयं भावः श्राद्धशेषमांसमश्नीयादित्याहत्य मांसभक्षणविधिभावात् प्रतिपत्तेश्च ज्ञातिप्रायं प्रकल्पयेदिति मनूक्तदिशा भोजनेनापि सिद्धेः, कृतवर्जनसङ्कल्पेन श्राद्धे मांसादानेऽपि सङ्कल्पनिर्वाहः । यदा तु भ्रान्त्या श्राद्धे मांसं दन्तं तदा पुरुषार्थसमासत्तेः "काम्यं नित्यस्य बाधक" मितिन्यायेन क्रत्वर्थं चमसबाधेन गोदोहप्रवेशवत् वर्जनसङ्कल्पस्य वलवत्त्वाच्च मांसं वर्जयेदेव, किन्तु श्राद्धशेषमांसं भक्षयेदित्याहत्य मांसे विध्यभावात् सर्वतः समुदायेति सर्वपदस्य सर्वनामत्वेन विशेषरूपेणोपस्थापकत्वेऽपि मांसस्य काम्यत्वेन नियतबुद्धया रुचित्वाभावात् मांसातिरिक्तहविः प्राशने प्रतिपत्तिसिद्धेर्मांसस्य ज्ञातिभोजनादौ प्रतिपत्तिसम्भवात् कृतसंकल्पं श्राद्धकर्ता वर्जयेदेव मांसम् । यदात्वविभक्तधनानां भ्रातॄणां मध्ये सर्वानुमत्या ज्येष्ठ एवैकः श्राद्धं करोति तदा कनिष्ठभ्रातरोऽपि सर्वे पूर्वदिने निरामिषसकृद्भोजनं श्राद्धदिने च सकृद्भोजनं ब्रह्मचर्य्यादिकञ्च कुर्य्युः । फलसंस्काराणां फलसमानाधिकरणत्वनियमात् । ज्येष्ठकृतादप्येकस्माच्छ्राद्धात् सर्वेषां पृथक् पृथक् फलप्राप्तेः । अन्यथा तेषां प्रत्यवायापत्तेः, सर्वे हि अधिकारिणः । अधिकारिणाञ्च फलम् । केवलं कर्त्रंशे ज्येष्ठस्य नियमः ।

प्रभा

बाध्यबाधकभावः प्रागेवोक्तः । "कर्तृसंस्कारार्थस्येति । आरादुपकारकत्वेनात्मगतापूर्वजनकत्वस्येत्यर्थः । प्रवलस्यतिभावः । "उपयुक्तसंस्कारस्येति । इड़ाभक्षणादिवत्प्रतिपत्तिकर्मरूपगुणकर्मत्वेन दुर्वलस्येत्यर्थः । कारिकायामुपयुक्तस्येति उपयुक्तसंस्कारस्येत्यर्थः । "उपयोक्तव्यसंस्क्रियेति द्रव्यग्रहणोद्देशीभूत संस्क्रिया प्रधानं कर्मेत्यर्थः । अर्थश्चतत्कर्म चेति अर्थकर्म इतिव्युत्पत्त्या तल्लाभात् ।

(१) प्रशास्तिस्तु इति पाठान्तरम् ।

## प्रभा

"अर्थकर्मणि द्रव्यापेक्षया कर्मणः प्राधान्यमित्यादिकमूहनीयम्। न्यायनयेऽदृष्टवदर्थकर्मात्मगतमपूर्वं जनयतीति संक्षेपः। प्रपञ्चस्तु पूर्वमीमांसामनुसन्धेयमिति।

मैत्रावरुणदण्डाधिकरणन्यायेनेति। स च न्यायो यथा पूर्वमीमांसादर्शने "प्रासनवन्मैत्रावरणाय दण्डप्रदानं कृतार्थत्वात्" इति जैमिनिसूत्रम् (अः ४. पा २ अधि ६, सूः १६) तत्र भाष्यम् "ज्योतिष्टोमे श्राद्धमागवै देवेभ्योऽपाक्रमेत्। यज्ञायातिष्ठमाना सा वनस्पतीन् प्राविशत्। सैषा वाग् वनस्पतिषु वदति या दुन्दुभौ या तूणवे या वीणायाम्। यद्द दीक्षितदण्डं प्रयच्छति वाचमेवावरुन्धे इति। तथा क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति, इति। मैत्रावरुणाय दण्डं प्रयच्छतीत्युदाहरणम्। तत्र संशयः किं दीक्षितधारणे शेषभूतस्य दण्डस्य मैत्रावरुणधारणं प्रतिपत्तिरथवाऽर्थकर्मेति। किं प्राप्तम्। मैत्रावरुणाय दण्डदानं प्रतिपत्तिः। कुतः-दीक्षित-धारणे कृतार्थत्वात्। दण्डेन दीक्षयतीति शेषभूतस्यान्यत्र व्यापारे प्रतिपत्तिर्न्याय्या। यथा चात्वाले कृष्णविषाणां प्रास्यतीति कण्डूयने शेषभूताया प्रासनं प्रतिपत्तिः। एवमन्यत्रापि द्रष्टव्यम्। द्वितीया च दण्डे विभक्तिस्तस्मात्-प्राधान्यमिति पूर्वपक्षे सिद्धान्तसूत्रद्वयम् "अर्थ कर्म वा कर्तृसंयोगात्स्रग्वत् (१७) तत्रभाष्यम्। अर्थकर्म वा स्यात्। कुतः कर्तृसंयोगात्। कर्तृ संयोगो भवति। मैत्रावरुणाय दण्डमिति। तस्मिंश्च दण्डो गुणभूतः। पुरुषः प्रधानभूतः। पुरुषं हि स प्रचरितुं समर्थं करोति। कथं यथापूर्वं तमोऽवगाहतेऽपः प्रविशति, गां च सर्पं च वारयति। अवलम्वनं च भवति। अतः पुरुषप्राधान्यान्नप्रतिपत्तिः। स्रग्वच्च द्रष्टव्यम्। यथा स्रजमुद्गात्रे ददाति, इत्यसत्यप्युपकारे पुरुषस्य प्रयोजनवत्त्वान्निष्प्रयोजनवत्त्वाच्च स्रजो भवति पुरुषप्राधान्यम्। एवमिहापि द्रष्टव्यम्। तस्मान्न प्रतिपत्तिरिति। अथ यदुक्तं द्वितीयाश्रवणाद्द दण्डप्राधान्यमिति। उच्यते। तथायुक्तं चानीप्सितमिति द्वितीया द्रष्टव्या। कुतः मैत्रावरुणे चतुर्थीनिर्देशात्। सम्प्रदाने हि चतुर्थी भवति। सम्पदानं च कर्मणाऽभिप्रेयते। तत्र दण्डादभिप्रेतत्तरो मैत्रावरुण इति गम्यते ॥ (१७) अपि च "कर्मयुक्ते च दर्शनात् ॥ १८ ॥ दण्डी प्रैषानन्वाह इत्यनूद्यते। तेन प्रचरतो दण्डं प्रदर्शयति। तदर्थकर्मणि सत्युपपद्यते। प्रतिपत्तौ च दण्डो मैत्रावरुणाय दत्तस्ततोऽपवृज्येत। तत्कर्म कर्तव्यं च कृतमिति न तेन प्रयोजनमिति न धार्य्येत। तत्रै तद्दर्शनं नोपपद्यते। तथा अहिस्त्वां दशतीति मैत्रावरुणं ब्रूयात्, अहिरिव ह्येष द्रष्टव्य इति। तथा मुशाल्यन्वाहेति।

## प्रभा

मुशलशब्दश्च दण्डे प्रसिद्धः। यथा कथं नु खलु मुशलिनो माणवका गङ्गां नावतरेयुरिति। तस्मादप्यर्थंकर्म। १८॥ विवेचितानि च टुप्टीकायां भट्टकुमारिलेन "न दानस्य मैत्रावरुणः प्रयोजकः। कृष्णविषाणा चात्वाले प्रति पाद्येति प्रतिपत्तिः। प्रसङ्गेनोपरितमो चिन्ता। "देशार्थाऽवभृथश्रुतिः"इति देशसम्बन्धादन्योऽपि देशो विपरिवर्तमानश्चिन्त्यते। किमनूद्यते नियम्यत इतिनियम-प्रसङ्गेन तथोत्तरेऽधिकरणेऽवतरतः, गुणसंस्कारयोरपि नियम एवेति। कारणद्रव्यं संस्कुर्वत्तेन सम्बध्यते तस्य रूपसाख्यायते। कीदृशेन व्यापारेण करणमनुष्ठि भवतीत्यनेन प्रसङ्गेन यागनिरूपणमायातम्। एवं जुहोतावपि॥ १६॥ दण्डो व्याप्यमानः क्रियया। शब्देनैव मैत्रावरुणार्थमुपदिश्यते। या च द्वितीया दण्डमिति। सापि न प्राधान्ये नेप्सितार्था, किं तर्हि व्याप्यमानतया। मैत्रावरुणो हि तत्र प्रधानभूतः। अत आह "तथा युक्तं चानीप्सितम्" इति द्वितीया भविष्यतीति। तस्मान्न दण्डः प्रधानभूतः। न च दण्डदानमदृष्टाय। तमोवगाहनादिषु दृष्टायैव॥ १७॥ च "दण्डी प्रैषानन्वाह" इत्यनूद्यते। तेन प्रचरतो दण्डं दर्शयति। प्रतिपत्तित्वे न तस्य धारणं भवेत्। अथार्थकर्म ततो-ध्रियमानस्य प्रकरणाविशेषाद्‌ यद्‌ यद्‌ कुर्यात्‌ तत्‌ तद्‌ दण्ड संयुक्तेनेति। तस्मात्‌ सर्वत्र दण्डभावादनुबाददर्शनमुपपद्यते। नन्वरुणाधिकरणे दण्डविधानमुक्तमुपसर्जनार्थौ विधीयत इति। उच्यते। प्रकरणात्‌ सर्वार्थं प्राप्तं प्रैषानुवचनयो र्निदिश्यते। एवं नास्ति विरोधः। दण्डानुवादोऽपि घटते। नियम-विधानादुपसर्जनार्थविधानमिति॥ १८॥ अत्र चात्वालं च महावेदिकाया उत्तरस्यां-दिशि यस्माद्गर्तान्मृत्तिकां संगृह्य वेदिकानिर्मिता भवति तच्च गर्तं चात्वालपद-ग्राह्यम्। यज्ञान्ते दक्षिणादानान्ते कण्डुयनप्रयोजनाभावात्‌ सा च कृष्णविषणा चात्वाले निक्षिप्ता भवतीति यज्ञोपयुक्तस्य कृष्णविषाणद्रव्यस्य विहितादेशे चात्वाले निक्षेपरूपपतिपत्तिकर्मेति ज्ञेयम्। एवञ्चात्र दण्डवत्प्रतिपत्तिकर्मतेन श्राद्धशेष-भोजनस्य दुर्वलत्वात्‌ निरामिषभोजनस्यार्थकर्मत्वेन प्रावल्यान्निरामिषभोजनं कर्तव्यमिति ध्येयम्।

पुरोडाशकपालेन तुषानुवपतीतिवदिति। पुरोडाशः यज्ञार्थं यवैस्तण्डुलैर्वा-निर्मितः पिष्टकविशेषः। कपालः मृन्निर्मितः (खर्पर) यज्ञीयपात्रविशेषः। उपवपति निःसारयतीत्यर्थः। अत्र यद्यपि तुषापनयार्थमङ्गत्वेन पुरोडाशकपालो विहितस्तथापि तुषानुवापो न कपालस्य प्रयोजकः। पुरोडाशार्थमुपात्तेनैव कपालेन तुषोपवापसिद्धेः किन्तु पुरोडाशएव कपालस्य प्रयोजकः। विधिर्यदर्थं

"सर्वेषां तु मतं कृत्वा ज्येष्ठेनैव तु यत्कृतम् ।
द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत् ॥ ५५६ ॥

इति मरीचिवचनेन तथाकामादिति ।

. अतएव तस्य यावदुक्तमाशीर्ब्रह्मचर्यग्रमतुल्यत्वादित्यत्र फलसंस्कारा ये तु वचनेन व्यवस्थापितास्ते द्वयोरपि फलित्वादावर्तन्ते इत्युक्तम् ।

तथाच फलसंस्कारजनकानां यजमानानामकरणे कनिष्ठानां किञ्चित् संस्कारहानौ एवं यदि यजमानस्य श्राद्धकरणाशक्तौ पुत्रादिरन्यः श्राद्धं करोति तदा यजमान एव पूर्वदिने निरामिषसकृद्भोजनादीन् करोति न तु पुत्रादयः । तेषां फलत्वाभावादेवेति । न चेतराङ्गवद् य एव यजमानस्याशक्तौ निरामिष-सकृद्भोजनादीन् करिष्यतीति चेत् फलसंस्कारानामन्येन कृतानां यजमान-योग्यतानापादकत्वादेतदेवोक्तं षष्ठे फलफलिसंस्कारास्त्वन्येन क्रियमाणा न यजमानस्य योग्यतां जनयतीति । सत्रे तु आनीतस्य फल (फलि) संस्कारा नान्यस्य योग्यतासम्पादनाय किन्तु संस्काराणां सप्तदशकर्तृकरणसम्पादनार्थ-मित्यन्यदेतत् ।

दन्तधावनताम्बुलं क्षौराभ्यङ्गमभोजनम् ।
रत्यौषधपरान्नञ्च श्राद्धकर्ता विवर्जयेत् ॥ ५५७ ॥ ( शातातपः )
श्राद्धं कृत्वा परश्राद्धे भुञ्जते ये च जिह्वलाः ।
पतन्ति पितरस्तेषां लुप्तपिण्डोदकक्रियाः ॥ ५५८ ॥ ( शातातपः )

## प्रभा

यदनुष्ठापयति स तत्र प्रयोजकः । एवमामिक्षार्थं दध्यानयने सति वाजिनस्य स्वतःसिद्धत्वादित्यादिकमूहनीयम् । परप्रयुक्तेत्यादि । श्राद्धार्थं पक्वेनान्नेन श्राद्धे सम्पादिते "भुञ्जीत पितृसेवितमित्यत्र द्वितीया निर्देशेन च प्रतिपत्तिकर्मत्वाच्चेति चिन्तनीयमिति संक्षेपः ।

शेषनाशे न शैषिककृत्यर्थं पुनः पाकः कर्तव्यः । अपि तु वैगुण्यशान्त्यर्थं विष्णुस्मरणादिकं कार्य्यं, प्रधाननिष्पत्त्यनन्तं भ्रान्त्यादिनाननुष्ठितस्याङ्गस्य सम्पादनाय न किञ्चित्कर्मकर्तव्यमिति "प्रधानस्याक्रिया यत्रो"त्यादिविचारावसरे प्रपञ्चित्तं केवलं वैगुण्यशान्तिर्विष्णुस्मरणाद्यात्मिका कार्य्येति संक्षेपः ।

जिह्वला जिह्वालोलुपाः।

पुनर्भोजनमध्वानं द्यूताध्ययनमैथुनम्।
श्राद्धकृच्छ्राद्धभोक्ता च सर्वमेतद्विवर्जयेत्।
स्वाध्यायं कलहञ्चैव दिवास्वप्नञ्च सर्वदा ॥ ५५६ ॥

अध्वगमनं तु क्रोशाधिकं निषिद्धम्। अध्वगमनमाक्रोशपूरणमिति हारीतोक्तेः ॥

श्राद्धे नियुक्तो भुक्त्वा वा भोजयित्वा नियोज्य च।
व्यवायी रेतसो गर्भे मज्जयित्वात्मनःपितृन् ॥ ५६० ॥

व्यवायी मैथुनवान् ॥

दशकृत्वः पिवेदापो गायत्र्याः श्राद्धभुग्द्विजः।
ततः सन्ध्यामुपासीत जपेत जुहुयादपि ॥ ५६१ ॥

इतिप्रायश्चित्तम्। अनुक्तप्रायश्चित्तश्राद्धविषयमिति विज्ञानेश्वरः।

## प्रभा

षष्टे इति। जैमिनीयदर्शने षष्ठेऽध्याये सत्रे प्रत्येकं कृत्स्नफलभोक्तृत्वं प्रतिपादितं "पुरुषार्थैकसिद्धत्वात् तस्य तस्याधिकारः स्यादिति। (अ ६ पा २ अधि १) प्रथमसूत्रादारभ्य सप्तदशावराश्चतुर्विंशतिपरमाः सत्रमासीरन्निति भाष्यनिर्देशात् सिद्धान्तितम्—"एकैको न समर्थो वहुकर्तृकं सत्रं रचयितुम्। पर्षदं तु कर्त्रीमर्थिणीमवगच्छामः। न चाकर्तुः फलं भवति। न चैकः कर्त्रोच्यते। तस्मात् समस्तानां फलम्। तेन सर्वे कर्तारः, सव्यपेक्षा भविष्यन्ति। सर्वे चेत्कर्तारः पृथक् पृथगेव फलेन संभन्त्स्यन्ते। एवं च "ज्येष्ठेन कृतेन श्राद्धेन भ्रातरोऽन्ये सर्वे तुल्यफलभागिनःस्युः। तत्र तत्र समुत्पन्नमदृष्टं प्रत्येकं भ्रातृषु समं समुत्पद्यते। तेन सर्वेषामेव भ्रातॄणां फलकामित्वात् सर्वेषामेव फलसम्वन्धः स्यात्। पुत्रादयस्तु न फलकाभिनः, कदाचित् प्रतिनिधित्वेन कृतेऽपि तैः श्राद्धे तेषां फलकामनाभावान्न तेषां पूर्वापरकृत्यकर्तव्यसमाचारः। फलसंस्कारा अन्येन क्रियमाणा न यजमानस्य योग्यतां सम्पादयति। ज्येष्ठेन कृतेऽन्ये भ्रातवोऽपि पूर्वापरदिवसीयकर्तव्यमनुतिष्ठेयुरन्यथा तेषां प्रत्यवायः स्यादेव। एवञ्च "सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत्। सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः। एवं यद्येकजाता वहवो भ्रातरः स्युःसहोदराः। एकस्यापि सुते जाते सर्वे ते पुत्रिणो मताः ॥ इति वृहस्पतिवचने, भ्रातृपुत्रे पुत्रातिदेशफलन्तु अतिदिष्टपुत्रसत्त्वे दत्तकादिपुत्राकरणमिति। पुत्रपदस्य स्वजन्यत्वविशिष्टपुस्त्वं रूढ्यर्थतावच्छेदकं पुन्नामनरकत्राणकर्त्तृत्वन्तु

रतिशक्तिर्वरा कान्ता भोज्यं भोजनशक्तिता।
दानशक्तिः सविभवा रूपमारोग्यमेव च।
श्राद्धपुष्पमिदंप्रोक्तं फलं ब्रह्मसमागमः ॥ ५६२ ॥ ( मत्स्यपुराणम् )
आयुः प्रजां धनं विद्यां स्वर्गं मोक्षंसुखानि च।
प्रयच्छन्ति तथा राज्यं प्रीत्या नित्यं पितामहाः ॥ ५६३ ॥
( मत्स्यपुराणम् )

यद्येकत्र भवेतां चेदेकोद्दिष्टञ्च पार्वणम्।
पार्वणं त्वभिनिर्वर्त्त्य एकोद्दिष्टं समाचरेत् ॥ ५६४ ॥

पार्वणममावास्याविहितम्। एकोद्दिष्टं पितृव्यादिसाम्वत्सरिकं मातृसाम्वत्सरिकञ्च; न तु पितृसाम्वत्सरिकं तस्य पृथगनुष्ठानाभावात्।

## प्रभा

योगार्थतावच्छेदकं पूतस्त्रायत इति पुत्र इतिव्युत्पत्तेः। अतः पङ्कजादिपदवत् पुत्रपदं योगरूढ़मिति वोध्यम्। भ्रातृपुत्रेणापि पुन्नामनरकत्राणसम्भवादितिभावः। मतमिदमपि न सर्ववादिसम्मतम्। पितृनामकीर्तनार्थमपि पुत्रप्रयोजनमतः औरसपुत्राभावे दत्तकपुत्रो गृह्यत इतितात्पर्य्यम्। अलममधिकेन। प्रकृतमनुसरामः। 'सपिण्डीकरणान्तानि यानि श्राद्धानि षोड़श। कृथक्नैव सुताः कुर्य्युः पृथग्द्रव्या अपि क्वचित्। प्रेतसंस्कारकर्माणि यानि श्राद्धानि षोड़श। यथाकालं तु कार्य्याणि नान्यथा मुच्यते ततः। सुतरामपृथग्धनाः न कुर्य्युः किन्त्वपृथक्धनाअपि पृथक् न कुर्य्युरिति लघुहारीतवचनतात्पर्य्यम्। अत्र विशेषमाह मरीचिः। 'मृते पितरि पुत्रेन क्रिया कार्य्या विधानतः। वहवः सुर्यदा पुत्राः पितुरेकत्र वासिनः। सर्वेषां तु मतं कृत्वा ज्येष्ठेनैव तु यत् कृतम्। द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत्॥ पुत्रेणेत्यविशेषात् सर्वेषामधिकारे प्राप्ते ज्येष्ठस्य साक्षात्कर्तव्यतामाह"वहव इति। ज्येष्ठेनापि" सर्वेषां भ्रातृणां "मत्करणेनैव करणं भवत्वि"ति मतं ज्ञानं कृत्वा विभक्तत्वे द्रव्यसंश्लेषेण च कृतं कर्म सर्वैरेव कृतं भवेत्। तदानीं द्रव्यासंश्लेषे च तस्माद्द्रव्यं प्राप्तव्यमिति कृत्वा कर्तव्यं। यदि केनचित् पुत्रेण तन्नपरिशोध्यते तदा स ऋणी भवति प्रत्यवायी च भवति। न तु तेन श्राद्धान्तरं कर्तव्यमिति श्राद्धविवेकोक्तं युक्तं "पृथङ्नैवसुताः कुर्य्यु"रित्यनेन पृथक्ररणस्य पर्य्युदस्तत्वेनानधिकारादिति श्राद्धतत्त्वे रघुनन्दनोऽपि। अतएव ज्येष्ठेन कृतेनान्यैः सर्वैः पुत्रैः श्राद्धफलं लभ्यत इति फलसंस्कराधिकरणोक्तिः सुतरां संगच्छत इतभावः। एतेन पितृभ्यां पुत्राणां पृथगद्रव्यत्वं न काम्यत इत्याशयोऽप्युपलभ्यते।

मातृसाम्वत्सरिकं तु पार्वणं चेत् तदा पुनस्त्रैपुरुषिकं मातृसाम्वत्सारिकं कृत्वा अमावास्याश्राद्धं कार्य्यं कालादर्शमते। इतरपार्वणस्य कालभेदादेवं मात्रन्तरश्राद्धममावास्याश्राद्धोत्तरमेकोद्दिष्टविधिना कार्य्यम्।

श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धं न तद्दिने।
नैमित्तिकं तु कर्तव्यं निमित्तानुक्रमोदये ॥ ५६५ ॥

इतिवचनात्। नैकः श्राद्धद्वयं कुर्य्यादिति निषेधवचनं काम्यश्राद्धपरम्। अमावास्या-प्रेतपक्षयास्तु पितुः क्षयाहे त्रैपुरुषिकपार्वणस्यामावास्यापार्वणेन तन्त्रतासिद्धिः। केवलमातामहाद्यधिकदेवताविषयत्वेनामावास्याश्राद्धस्यैव तन्त्रत्वात् पुरुरवोमाद्रवःसंज्ञकविश्वेदेवानां देवतात्वम् एवममावास्या श्राद्धदिने तदहर्विहितं षाट्पुरुषिकं नित्यश्राद्धं न कर्तव्यम्। अमावास्याश्राद्धेनैव तन्त्रसिद्धत्वात्। एवमष्टकाऽन्वष्टकायुगादावपिज्ञेयम्।

संघातमरणे श्राद्धानुष्ठानक्रमः।

कृत्वा पूर्वमृतस्यादौ द्वितीयस्य ततः पुनः।
तृतीयस्य ततः कुर्य्यात् सन्निपाते त्वयं क्रमः ॥ ५६६ ॥
भवेद् यदि सपिण्डानां युगपन्मरणं तदा।
सम्वन्धासत्तिमालोच्य तत्क्रमाच्छ्राद्धमाचरेत् ॥ ५६७ ॥

**प्रभा**

रतिशक्तिरित्यादिकं द्वयं द्वयं मिलित्वा सत् श्राद्धस्य फलम्। तथाहि "रतिशक्तिः स्त्रियः कान्ता" इति द्वयं मिलित्वा एकं फलम्। रतिशक्तिरत्यमुकूल विलक्षणकृतिमत्त्वम्। एवं भोज्यं भोजनशक्तितेति मिलित्वा अपरम्। भोजने शक्तिर्यस्येति-वहुव्रीहेरुत्तरं ताप्रत्ययः भोजनसामर्थ्यमित्यर्थः। दानशक्तिः सविभवेत्यपरं, दानशक्तिर्दानविषयक उत्साहः। उत्कटेच्छेति यावत्। उत्कटत्वमिच्छानिष्ठविषयताविशेषः, दाहम्नुकूलशक्तिरिव रत्याद्यनुकूला शक्तिरतिरिक्तपदार्थः, दाराद्यनुकूला बिलक्षणाकृतिर्वा। रूपमारोग्यसम्पद इत्यपरम्। पुष्पं तद्वदल्पं फलं तद्वन्महत्। "विमुक्तिदा येऽनभिसंहितेष्वि"ति वचनाद् यथा स्वधाभुजः काम्यफलाभिगन्धौ मूर्ताः फलदातार स्तथाऽभिसन्धानवर्जितस्थले ते विमुक्तिदातारः। निष्कामकर्मभ्यो मुक्तिर्जायत इति भावः। अतएव "फलं ब्रह्मसमागमः"। "यज्ञे तपसि दाने च सदित्येतत्प्रयुज्यते" ॐतत्सदितिनिर्देशो ब्रह्मणस्त्रिविधः स्मृतः। इत्यादिषु गीतोपनिषद् वचनेषु सुव्यक्तमेवेति भावः।

काम्यश्राद्धानि। विष्णुः "आदित्यसंक्रमणं विषुवद्वयं विशेषेणायणद्वयं व्यतीपातोने जन्मर्क्षमभ्युदयञ्च"।

एतांस्तु श्राद्ध कालान् वै काम्यानाह प्रजापतिः।
श्राद्धमेतेषु यद् दत्तं तदानन्त्याय कल्पते ॥ ५६८ ॥

व्यतीपातः सूर्य्याचन्द्रमसोः संक्रान्तिसाम्यम्।

श्रवणाश्विधनिष्ठाद्रानागदैवतमस्तके।
यद्यमा रविवारेण व्यतीपातः स उच्यते ॥ ५६९ ॥

मस्तके प्रथमपादे।

स्नानं दानं तथा होमं श्राद्धं देवार्चनं तथा।
व्यतीपाते कृतं सर्वं कोटीसन्निहिताधिकम् ॥ ५७० ॥
अयनद्वितये श्राद्धं विषुवद्वितये तथा।
संक्रान्तिषु च सर्वासु पिण्डनिर्वपनादृते ॥ ५७१ ॥
ततः प्रभृति संक्रान्तावुपरागादिपर्वसु
त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टं मृतेऽहनि ॥ ५७२ ॥

इतिवचनद्वयात् संक्रान्तौ पिण्डदानविधिनिषेधयोः षोड़शीग्रहणाग्रहणवद् विकल्पः। दानविधिपक्षे तु फलभूमा कल्पनीयः।

आकामावेषु यच्छ्राद्धं यच्च दानं यथाविधि।
उपवासादिकं यत्र तदनन्तफलं स्मृतम् ॥ ५७३ ॥

मन्वादिश्राद्धम्।

अश्वयुक् शुक्लनवमी कार्तिके द्वादशी सिता।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥ ५७४ ॥
फाल्गुनस्याप्यमावास्या पौषस्यैकादशी तथा।
आषाढ़स्यापि दशमी माघमासस्य सप्तमी ॥ ५७५ ॥
श्रावणस्याष्टमी कृष्णा आषाढ़स्यापि पूर्णिमा।
कार्तिकी फाल्गुनी ज्यैष्ठी चैत्रपञ्चदशी मिता।
मन्वन्तरादयश्चैता दत्तस्याक्षयहेतवः ॥ ५७६ ॥

**प्रभा**

षोड़शीग्रहणाग्रहणवद् विकल्प इति यथा पूर्वमीमांसायां "शिष्टा तु प्रतिषेधः स्यात् ॥ ( जैः अः १, पाः ८, अधि ३, सूत्र ६ ) अत्र प्रथमेऽधिकरणे न होतारं वृणीते नानुयाजेषु येयजामहं करोतीत्यादिषु नञ्श्रुत्या कर्तव्यतां प्रतिषेधतीति टुप्टीकायां प्रदर्शितम् । अत्र सिद्धान्तसूत्रे शवरस्वामी प्राह "प्रथमेऽधिकरणे न शब्दः पर्य्युदासार्थः । द्वितीये त्वर्थवादार्थः । अथ किंलक्षणकः प्रतिषेध इति लक्षणमुच्यते" शिष्टा तु प्रतिषेधः स्यादिति । यथा नातिरात्रे गृह्णाति षोड़शिनमिति । न तत्र शक्यं वक्तुं पर्य्युदास इति सम्बन्ध एव हि न स्यात् इति । अत्र टुप् टीकायां "यद्यनतिरात्रे गृह्णातीति, अतिरात्रे न ग्रहीतव्यः । तत्र विधानानर्थक्यं षोड़शिनः । अथ अषोड़शिनं गृह्णीयादिति तथाप्ययमेव दोष इति । स्वामी प्राह अतिरात्रवर्जितातिरात्रे गृह्णाति षोड़शिनमिति । नापि कस्यचिदर्थवादत्वमत्र सम्भवति । तस्मान्नञो गृह्णातीत्यत्र सम्बन्धः । ननु परस्परविरुद्धौ विधिप्रतिषेधौ न सम्भवतः । उच्यते । वचनप्रामाण्यात् प्रतिषेधो विधिं वाधित्वा भविष्यति । विधिरपि प्रतिषेधः । नान्यागतिरस्तीति पक्षे मिथ्याप्रत्ययः कल्पयिष्यते । तदा विधिर्यदा न प्रतिषेधः । तदा प्रतिषेधो यदा न विधिरिति । ननु सर्वदा विधिः प्रतिषेधश्च प्राप्नोति । उच्यते । उक्तमेतद्वचनप्रामाण्याद्विरोधाच्च मिथ्याप्रत्ययः प्रयोगवचनएकं कल्पं गृहीत्वा न द्वितीयमपि गृह्णातीति । तस्मादन्यतरेण कल्पेन सिध्यतीति ! ननु कल्पान्तरभावे वैगुण्यम् । अत्रोच्यते । सत्यं वैगुण्यम् । वैगुण्येऽपि तत्सिद्धिरेव वाक्यात् प्रमाणादवगम्यते । तस्माददोषः । यत्र पुनरन्या वचनव्यक्तिरस्ति वाक्यस्य तत्र न विकल्पो भवति । यथा नानुयाजेषु येयजामहं करोतीति । अतिरात्रयागस्तु ज्योतिष्टोमयागस्य सप्तप्रकारभेदान्तर्गताग्निष्टोमयागस्य विकृतरूपो यागः । षोड़शी यज्ञीयपात्रविशेषः । तत्र "अतिरात्रे षोड़शिनं गृह्णातीत्यतिरात्रे षोड़शिग्रहनं विहितं तथा" नातिरात्रे षोड़शिनं गृह्णातीतिप्रतिषेधात्ग्रहणाभावोविहितः । तयोर्ग्रहणाग्रहणयोः परस्परविरुद्धयोरेकस्मिन् प्रयोगेऽनुष्ठातुमशक्यत्वात् क्वचित्प्रयोगे ग्रहणानुष्ठानं प्रयोगान्तरे तदभावानुष्ठानमिति, व्रीहिभिर्यजेत, यवैर्वा यजेतेतिवद्विकल्पः । स चाष्टदोषदुष्ट इति प्राक् प्रदर्शितः । तथाऽत्रापि संक्रान्त्यादिषु पिण्डदानविधिनिषेधवचनयोः प्रामाण्यात् क्वचित्पिण्डदानं न कर्तव्यम् । क्वचिच्च पिण्डदानं कर्तव्यमिति उदितानुदितहोमवद् वा विकल्पः कल्पनीय इति । ततश्च दानविधिपक्षे फलभूमा कल्पनीयेतिग्रन्थकृता यदुक्तं तदपि चिन्तनीयमिति संक्षेपः ।

आकामावैष्विति । आषाढी-कार्तिकी पू माघी-वैशाखीर्णिमासु यद्दानं तदाकामा-

प्रभा

वैष्वनन्तकमिति प्रतिपादितं तद्वदत्रापि तेषु श्राद्धादेरप्यनन्तफलकत्वमुक्तमितिभावः।

अत्र मूलेऽनुक्तमपि श्राद्धादौ गोत्रनामपदोंद्युचारणप्रकारो विविच्यते। पारस्करप्रचेतसौ "अर्घ्यदानेऽन्यसंकल्पे पिण्डदाने तथाक्षये। गोत्रसम्बन्धनामानि यथावत् प्रतिपादयेत्" छन्दोगपरिशिष्टे गोत्रमामभिरामन्त्र्य पितृनर्घ्यं प्रदापयेदिति। शङ्खलिखितौ "सव्येन पाणिना दक्षिणं पाणिमुपसमाधाय एकैकं त्रिभिरामन्त्र्य असावेत"दिति। त्रिभिः गोत्रसम्बन्धनामभिरित्यर्थः। "नामगोत्रे समुच्चार्य्य अथवा गोत्रनामनीति विकल्पदर्शनात् सन्देहे नागृहीतविशेषणे विशेष्ये बुद्धिरितिन्यायेनादौ गोत्रं ततो नामपदं प्रयोज्यं तथैव शिष्टाचारात्। अत्र सन्तति र्गोत्रजननकुलाणि इति पर्य्यायपाठात्। सा च विशेषरहितेति विशेषलाभाय तदादिभूतपुरुषेण कुशिकादिना ऋषिणावच्छिन्नो गोत्रशब्दार्थः। यद्यप्यनादिसंसारे सृष्ट्याद्यभावपक्षे अनादिपुरुषासम्भवः तथापि कौशिकस्य ये पित्रादयः पूर्वे ये च पुत्रादयोऽर्वाञ्चः ते सर्वे कौशिकेन गोत्रान्तरेभ्यो व्यावृत्ताः कौशिकोपलक्षितपुत्रपौत्रपरस्परात्वेन गोत्रशब्दाभिधेयाः। एवं गोत्रशब्दस्य परम्परारूपधर्मवाचित्वात् तद्धर्मविशिष्टव्यक्तिलाभाय सगोत्र इति। तेनावच्छेदकपुरुषसमानपुत्रपौत्रपरम्पराक इत्येव विशेषणविशेष्यभावात् कौशिकसगोत्र इत्यादिनिर्द्देशः कर्तव्यः। तथाच स्मृतिः "सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि" "असगोत्रा च या मातुः" इत्यादि। महाभारते "पराशरसगोत्रस्य वृद्धस्य सुमहात्मनः" इत्यादिदर्शनात्। न च "वैयाघ्रपद्यगोत्राय" इतिवचने सगोत्रपदाभाव कथं संगच्छत इतिवाच्यं तत्र मध्यपदलोपिसमासेन सकारस्य परित्यागात्। तथाच गोभिलः "गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्मणि। गोत्रस्तु तर्पणे प्रोक्तः कर्ता चेवं न मुह्यति॥ सर्वत्रैव पितः प्रोक्तः पिता तर्पणकर्मणि। पितुरक्षय्यकाले तु अक्षयां तृप्तिमिच्छता। शर्मन्नर्घादिके कार्य्यं शर्मा तर्पणकर्मणि। शर्मणोऽक्षय्य काले ऽपि पितृणां दत्तमक्षयम्"। अत्र ब्राह्मणानामेव शर्मा देवो देवशर्मा वा पदप्रयोगः तथाच यमः "शर्मा देवश्च विप्रस्य वर्मा भ्राता च भूभुजः। गुप्तो दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत्। ब्राह्मणस्त्रीणां देव्यन्तता। क्षत्रियाया राज्ञी, वैश्याया दत्ता, शूद्राया दासीतिप्रयोगो व्यवश्रियते। केचि तु "देव्यन्तास्तु स्त्रियः सर्वाः" इति वचनात् सर्वत्र देवीशब्दं प्रमुयुञ्जत इति संक्षेपः।

इत्यत्र द्वादशीसितेति सितशब्दस्तृतीयया चान्वेति। एकादशी सितेति सितशब्दो दशम्याचान्वेति। कल्पभेदेन मतान्तरमाह—

अश्वयुक् शुक्लनवमी कार्तिके द्वादशी सिता।
तृतीया चैत्रमासस्य ज्यैष्ठे पञ्चदशीसिता॥ ५७७॥

सप्तमी माघमासस्य पुषस्यामा तथा परा।
वृश्चिके चाष्टमी कृष्णा मकरैकादशी सिता॥ ५७८॥

गोविन्दद्वादशी कुम्भे मेषे पञ्चदशी सिता।
कार्तिकीफाल्गुण्याषाढ़ी पूर्णिमा द्वादशीसिता॥
मन्वन्तरादयश्चैता मुनिभिः परिकीर्तिताः॥ ५७९॥

सिता पञ्चदशी पौर्णमासी। वृश्चिके कार्तिके मकरे पुष्ये कुम्भे माघे मेषे चैत्रे आषाढ़े पूर्णिमा द्वादशी च।

वत्सगोत्रसमुत्पन्नो दिव्यसिंहाभिधः सुधीः।
श्राद्धदीपाभिधं ग्रन्थं कृतवान् कृतिनां मुदे॥

सर्वतन्त्रस्वतन्त्राणां नीतिनीताखिलायुषाम्।
भव्यदिव्यादिसिंहानां श्राद्धदीपेन दीप्यताम्॥ ५८०॥

इति श्रीमद् दिव्यसिंहविरचितः श्राद्धदीपः समाप्तः॥ ०॥

## प्रभा

पूर्वोक्तवचनैःसह उत्तरवर्तिनां वचनानां विरोधादाह कल्पभेदेनेति मतान्तरेणेति च। नीतिनीताखिलेति। नीतौ धर्मसमाजरक्षणनीतौ नीतानि यापितानि अखिलानि आयूंषि येषां तेषामिति यावज्जीवं सन्नीतिमार्गांनुसरतां मीमांसादिपरिकलित सर्वशास्त्रेषु तीक्ष्णधिया स्वातन्त्र्यसम्पादकानां भव्यानां मङ्गलमयानां दिव्यानां दिविजातानां आदिसिंहानां नृसिंहावताराणामिव दिव्यसिंहानां ग्रन्थरचयितॄणां दीपतुल्येन श्राद्धदीपेन श्रद्धासम्पन्नो दीप्यतामितिसंक्षेपः।

श्रीरामजीवने स्मार्ते यामिनीकान्ततार्किके।
श्रीकालीपदतत्त्वज्ञे गौरलाले च सद्गुरौ॥

## प्रभा

नरनारायणाङ्ग यस्य देवकीगर्भसम्भूतेः ।
तस्य मे रमतां चित्तं येन मुक्तिरवाप्यते ॥
न्याये वैशेषिकेषु प्रणयपरवशात् सांख्यवेदान्तशास्त्रे
मीमांसाधर्मतन्त्रे प्रकृतिपरिचयो भावभावाद विभाति ।
साहित्ये शब्दसिन्धावपपदगमयात् स्नाति योऽसौ सुटीकां
वत्सश्रीयादवेन्द्रो व्यरचयदमलां श्राद्धदीपे प्रभाख्याम् ॥
मन्वादीनां मतं यत् प्रमितिपरतया दिव्यसिंहेन दृष्ट्वा
तत्तन्मीमांसकानामधि करणपरै र्योजितं श्राद्धदीपे ।
शाके रत्नाकराङ्काचलविधुविमिते पैत्र्यदीपान्वितायां
तट्टीकेयं समाप्ता श्रुतिस्मृतिचरतां ब्राह्मणानां हिताय ॥

इति प्रभाख्याश्राद्धदीपव्याख्या समाप्ता ।

—०—

ॐश्रमतो वासुदेवस्य श्रीचरणे समर्पिताऽस्तु ।

## श्राद्धदीपमुलप्रवाहसमुद्धृतां श्लोकानामकारादिक्रमेण प्रथमांशानुक्रमणिका।

### अ

श्लोकाङ्काः—पृष्ठाङ्काः

## श

# परिशिष्टांशः

श्राद्धदीपे समुद्धृतानामुपजीव्यानामाकर ( मूल ) ग्रन्थानां ग्रन्थकर्त्तृणां निवन्धकाराणां च नामानि।

पुराणेषु

१। आदित्यपुराणम्
२। कूर्म ,,
३। मत्स्य ,,
४। वृहन्नारदीय ,,
५। वराह ,,
६। वायु ,,
७। विष्णु ,,
८। विष्णुधर्मोत्तर
९। भविष्यपुराणम्
१०। लिङ्ग ,,
११। स्कन्द ,,
१२। भागवतपुराणम्

निवन्धकारादयः

१। मुकुन्ददीक्षितः
२। रघुनन्दनः
३। शूलपाणिः
४। माधवाचार्य्यः
५। लक्ष्मीधरः
६। मञ्जरीकारः
७। विज्ञानेश्वरः
८। विद्याकरवाजपेयी
९। शम्भुकर वाजपेयी
१०। नरसिंह वाजपेयी
११। सिद्ध वाजपेयी
१२। हारीत भाष्यकारः
१३। विश्वनाथमिश्रः
१४। व्याघ्रपादः

गृह्यसूत्र श्रौतसूत्रधर्मसूत्रेषु

१। आश्वलायन गृह्यसूत्रम्
२। गोभिल ,,
३। पारस्कर ,,
४। वौधायन धर्मसूत्रम्

विविधाग्रन्थाः

१। मत्स्यसूक्तम्
२। पैठिनसी
३। वैशम्पायनः
४। ऋष्यशृङ्गः
५। शूनकः
६। हेमाद्रिः
७। तन्त्ररत्नम्
८। श्राद्धविवेकः
९। छान्दोग्यपरिशिष्टम्
१०। कालादर्शः
११। स्मृतिरत्नमाला

स्मृतिषु

१। मनु संहिता
२। याज्ञवल्क्य,,
३। आपस्तम्ब ,,
४। कात्यायन ,,